प्रमुखमृगयोचितवस्तुस्तोमातिभारमन्थरगतीश्चङ्क्रम्यमाणाः क्रमेलकपङ्क्तीर्[1]ददर्श ॥२५॥

क्षणेन च चर्ममयमिवाम्बरतलं खड्गलतामयमिव दिग्वलयं तुरङ्गमयमिव भूमण्डलं रजोमयमिव रोदसीविवरं हेषितबृंहितचीत्कृतिघन्टाटङ्कृतिसिंहनादसहितबलबहलकोलाहलमूर्छितप्रायम्भुवनमण्डलमनुबभूव ॥२६॥

अनन्तरञ्च

एते यान्ति किमम्बरे[2] किमथवा भूमावपि क्ष्मापते-
रश्वा इत्थमशेषलोकभणितान्याकर्ण्य किं वाजिनः ।
विस्पष्टाखिलदन्तपङ्क्ति[3] जहसुः प्रोच्चैः खुरोत्थं रजो-
राशिं व्योमचरं यदूर्ध्ववदनाः सन्दर्शयन्तः स्थिताः[4] ॥४४॥

[5]चेतोऽतीन्द्रियमप्यसौ मरुदहो नेत्राध्वदूरङ्गतः
किं सिन्धोरपि लङ्घनेन यदसौ शाखामृगैर्लङ्घितः ।
यज्जल्पन्त्यपि सैन्धवेति किल[6] नो नामेति सञ्चिन्त्य किं
प्रो[त्]प्लुत्यापि सखेदमेव तुरगाः क्षान्त्या निवृत्तिं ययुः ॥४५॥

सप्तैव द्युमणे[7]र्हया नियमिता[8] व्यालैस्तथा चालिता
यन्त्रा निश्चरणेन वक्रगतयः किन्तैर्जितैर्मादृश[ा]म् ।
ब्रह्माण्डन्तु विभेद वामनखः किन्तेन भिन्नेन वा
प्रो[त्]प्लुत्येति निवर्तते नरपतेर्मन्ये हयानाञ्च[यः] ॥४६॥

विश्वाशाप्रतिपालकस्य यदमी वाहा वयम्भूपते-
राशालङ्घनमप्ययुक्तमय[9]शोबीजम्भवेन्मा[10]दृशाम् ।

---

1. Ms. ०पंक्ती 2. Ms. ०स्व० 3. Ms. पंक्ति 4. Ms. ०थाः
5. Ms. ते० 6. Ms. ०न 7. Ms. द्यमणेहमा 8. Ms. ०नि०
9. Ms. ०मु० 10. Ms. ऽस्मा०

इत्थं निश्चितचेतसोऽतिमहतः खेदाद्धिकृत्यानना[1]-
न्याक्षेपेण समालिखन्ति वसुधां निन्दन्ति मन्ये विधिम् ॥४७॥

इत्थमनेकविधविबुधकविनिवहा महाराजपरिजनभूताः समुदा-
ःरन्ति स्म ।२७

ततश्च नानाविधसेनाव्यूहैर्विरचितविविधव्यूहैश्चित्रसेनत्वमस्या-
ारोत्तुतामुपनिन्ये ॥२८॥

ततश्च चन्दनचूर्णचामरचयचालनलाजमोदकदूर्वाक्षतविक्षेप-
ुरस्सरसुमधुरमङ्गलाशीर्वचनपुरस्कृतो वसुन्धरावृन्दारकवृन्दाभि·
ान्यमानदिग्विजयो महामात्रोपनीतमुपरिविरचितातिमात्रमहार्ह-
ुभ्राम्बरमयमहामन्दिरं पुरन्दर इव मन्दरं महाधरेन्द्रो[2] महामातङ्ग-
ारुरोह ॥२९॥

क्षणेन च प्रलयकालविजृम्भमाणमहा[जल]निधिनिवहबहल-
कल्लोलपरम्परा इव प्रचण्डझञ्झाप्रभञ्जनप्रेर्यमाणपुष्करावर्तकमुख-
संवर्त[वर्त]मानमहाम्भोवाहना इव प्रच्छाद्य समन्ततो वसुन्धरां
निर्भरभरेण स्यन्दो[3]लिकाविशेष[4]मालामान्दोलयन्त्यो दिवसनिशा-
सन्ध्याव्यतिरिक्तमिव समयं निष्पादयन्त्यः श्रीचित्रसेनमहीमहेन्द्र-
[सेना] महासेनाधिष्ठिता इव देवसेनाः समतीत्य ग्रामनगरमयानि
भुवनानि काननमासादयामासुः ॥३०॥

तत्र क्वचन कपिलकृष्णकौशिकशुकपिप्पलायनहारीतभारद्वाज-
प्रमुखद्विजसमाजोद्गीतरम्याणि शाखासहस्राणि विप्राणां श्रुति-
परम्परामिव, क्वचिदुभयभागनिरन्तरसन्ततशरसञ्चारदुरवगाह-
सद्रोणार्जुनशिखण्डिनकुलवाणा[5]सनपत्रिसमागमविशेषभीषणाम-
न्तरा भीमवेगनिपात्यमानपर्वतीयपर्वतायमानमत्तमातङ्गसङ्घां नाना-

---

1. Ms. ०नाः० 2. Ms. ०ही० 3. Ms. ०नि० 4. Ms. ०षामाना०
5. Ms. ०वाणामनपत्ति०

जनपदावधिकाभिधावदतिवेगवद्ब्राह्निनीसङ्घसम्पादितकबन्धच्चयमहा-ताण्डवाडम्बरविराजमानां कालवेगातिविवर्धमानरंहःसङ्घातसमा-पतद्राङ्गेयो[1]त्तारहारनिनादनिरस्यमानधार्तराष्ट्रोलूकशकुनिमत्स्यराजां क्वचन विवर्धमानकर्णशल्यविषमविवर्धन[2]ध्वानां महाभारतमहा-सङ्ग्राममहीमिव महीयसीं सिन्धुसम्भेदपरम्परां, क्वचिदन[3]लनल-वरुणमरु[त्व]दहि[म][4]दीधितिभूसमागतां कु[5]ण्डिननगरीमिव, क्व-चिदतिवेगाभिघातनिपतन्महाशिलीमुखव्यूहचुम्ब्यमानपुण्डरीककु[6]व लयां महासरसीमिव, क्वचिद्दत्तसोमार्कविम्बभूषितां नभोमण्डली-मिव, क्वचन विकचमनोहारिचम्पककलिकाकलापव्याजेन महाराज-मङ्गलनीराजनाय वनदैवतप्रवर्तितमिव दीपकलिकाकलापमादधानां, समुच्छ्रितानेकचन्द्रकि[7]चमरीपुच्छतालवृन्ततयाभ्यागतमहीमहेन्द्र-व्यजनक्रियामिव सम्पादयन्तीं,केकिकोकिलकलकण्ठनीलकण्ठकल-कण्ठध्वनिमिषेण स्वागतमिव पवनजवगलितललितकुसुमसञ्चय-मयमिवोपचारं त[8]न्नि स्यन्दमानामन्दमकरन्दमयानीव पाद्याचमनी-यानि वितन्वा[9]नाम्, अतिमनोहरां काननलेखान्ददर्श ॥ ३१ ॥

तत्र च काञ्चन काञ्चनविद्रुमालङ्कृतां महामानवतीं, काञ्चन वियोगातिशयमलिनां समदनाञ्च, काञ्चन वयोविशेषोपनीत-रजोयोगदूषितां, काञ्चन स्निग्धातिमुग्धसुधीरधरसङ्गतां, काञ्चन पुरतो विराजमानात्तकदम्बां क्रीडानिरतामिव कामिनी[ं], काञ्चन मरुद्धरालिङ्ग्यमानहरिणीरम्भालम्बुषाममरावतीमिव, काञ्चन सताण्डवपिशाचमण्डलमध्यवर्तिभुजङ्गमालङ्कृतस्थाणुस्थानमयीं कैलासगुहामिव, काञ्चन नरहरिवराहत्रिविक्रमचरितमयीं पुराणेति-हासकथामिव, काञ्चन वाल्मीकशाण्डिल्यव्याघ्रपादालङ्कृतां तप[ः]-स्थलीमिव, काञ्च[न] ब्रह्मैकतानभावननिरतां महायोगिनीमिव,

1. Ms. ०च्चा० 2. Ms. ०र्द्ध० 3. Ms. ०नि० 4. Ms. ०दिङ्कीम० 5. Ms, कुम्भिल० 6. Ms. कुवलवयां 7.Ms. ०किं० 8. Ms. ०ञ्चिः० 9. Ms. ०च्चा० 10. Ms. ०नस्नु०

काश्चन खरतरखड्गाभिघातपात्यमानधूम्रलोचनचण्डमुण्डमहिषां प्रकटितसिंहासनां हैमवतीमिव, काश्चन रात्रिञ्चरतरुणीगणपरिवृतामशोकवनावस्थानां विदेहभूतनयां श्रीसीतामिव, क्वचन ताम्बूलपूगखदिरकर्पूरलवङ्गैलावासितद्विजराजिशोभमानां कृष्णागुरुचन्दनाञ्जनमृगमदहरितालतिलकपत्रावलीभूषितां वासकसज्जामिव, क्वचन प्रलम्बलाङ्गलिचक्रिविलोकनोत्कण्ठितपशुपालशिशुमण्डलां विषाणवेणुत्रिविधनिनादपूरितदिगन्तरां व्रजस्थलीमिव, महीयसीं वनमहीमहीनसत्त्वो[1] महीपतिरवलोकयामास ॥३२॥

केचिद्वारविलासिनीमुखसुधापा[2]नैकबद्धादरा
भूपाः केचन सीधुपाननिरता मिथ्यातपोव्यञ्जनाः ।
एकः श्रीयुतचित्रसेननृपतिः पादत्रयीविच्युतं
धर्मन्धारयते न चेत् कथमसौ तिष्ठेदनालम्बनः ॥४८॥

अपि च

वि[3]द्यासत्कवितासदर्थरुचिरालङ्कारचर्चादिभि-
र्नित्यं दै[4]वतदीनभूसुरघटासन्तर्पणार्चादिभिः ।
ध[5]न्यीकृत्य धरातलं विजयते क्ष्मापालचूडामणि-
र्धत्ते चैकभुजेन भूमिवलयं श्रीचित्रसेनः कृती ॥४९॥

अपि च

पुरोगतुरगावलीखुरशताहता भूरियं
गजालि[6]क[7]कटस्खलन्मदजलैरभूद्दुस्तरा ।
अथो नु रथगामिनः कथमिमां तरिष्यन्त्यहो
[महो]र्मिचयभीषणामिति भयं समुन्मीलति ॥५०॥

अथवा अहो जातोऽयमुपायः क्षणादेव ॥३३॥

---

1. Ms. ०त्वो 2. Ms. ०धा० 3. Ms. ०म० 4. Ms. ०दे० 5. Ms. ०न्नी० 6. Ms. ०नि० 7. Ms. ०न०

तथाहि

यस्योत्तुङ्गतुरङ्गदारुणखुरक्षोदेन[1] कुम्भ्युल्लसत्[2]-
कुम्भव्रातसमुच्छलन्मदजलैर्या[3] भूरभूदुस्तरा ।
तस्यैवाश्वगणैः खुरोद्धुतरजोराजीभिरेषा क्षणा-
न्नीता भो मरुतां [तथा च मरुतां] संवर्धनापातनैः ॥५१॥

इत्थमपि तत्र तत्र वनवासिजनगीयमानमाकर्णयामास ॥३३॥

ततश्च "भो भोः सेनापतयः सेनापतिनिदेशवर्तिनश्च सावधानैः श्रूयतामवधार्यताञ्च—एषा सत्वरचरणाङ्कसञ्चारसूचिता शशकशल्लकी-प्रसृमरसृमरकृष्णसारसारङ्गसङ्कुला काननवीथी, त्विदमपि कराल-काननकोलकलापलुलापकण्ठीरवकरिनिकरकण्ठगर्जितमतिभयङ्करं[4], पुरतोऽपि गण्डशैलमण्डलायमानगण्डकपुण्डरीकचण्डचीत्कार[5]-घोरघोषम्, इतो वञ्चकवनविडालवानरवृकवृन्दान्दोलनचञ्चलतरम्[6], अपरमपि पार्श्वतो भीमस्वनभल्लनिवहभीषणम्, अपरमपि मयूर-सारसकपोतकलविङ्ककोकिलकलकण्ठकुक्कुटकोयष्टिककुभकारण्डव[7]-शुकसगुणपत्रसाङ्काररवशङ्काकरम्, इदमपि जरदजगरगरलानलधूम-शिखाकारश्वसितानिलसञ्चार[द]न्दह्यमानं, क्वचिदपि भुजङ्गम-सङ्कभूषितभूताधिपप्रचण्डस्त्रवदण्डतालवेतालभैरवभूमण्डलं[8][9] कैलास-कन्दरमिव । तदिदानीं समन्ताद्विष्टभ्यन्तां समारोप्यन्तां वागु-रापाशाः[10], समन्तात् स्थाप्यन्तां द्विरदतुरङ्गशकटस्यन्दनारोहाः, दीप्यन्तां ज्वलनाः[11], योज्यन्तामनलयन्त्राणि,आरोप्यन्तां शरासनानि, मोच्यन्तां शराः सारमेय[ा]श्च, क्षिप्यन्तां विक्रान्तशकुन्ताः कुन्ताश्च, आसन्नेषु च निपात्यन्तां क्षुद्रकाश्चन्द्रहासाश्च" इति समन्तादश्रूयत महान् घोषणानिनादः ॥३४॥

---

1. Ms. ०त० 2. Ms. ०म्भ्य० 3. Ms. ०या 4. Ms. ०लु० 5. Ms. ०ना० 6. Ms. ०ऽव० 7. Ms. ०ङ्ग० 8 Ms. ०शङ्ख० 9. Ms. ०स्र० 10. Ms. ०गाः 11. Ms. ०ङ्ग०

ततश्च चञ्चलचन्द्रहाससहस्रचञ्चलासञ्चयसञ्चार[1]चित्रितमन्योन्यसंघट्टनठनायमानविविधायुधसंघर्षणजनितज्वलनसञ्चयखद्योतजालमया[न्त]रीक्षं दहनयन्त्राभिघातस्फूर्जथुगर्जितमयदिग्वलयं प्रचण्डदहनभयसत्वर[2]पलायमानगहनचरजन्तुसन्तानतरलमहावेगस[3]ञ्जनितप्रचण्डझञ्झाप्रभ[4]ञ्जनान्दोलनदोलायितभुवनमण्डलमाकृष्यमाणप्रचुरकोदण्ड[5]निचयसमुदितमहेन्द्रचापकलापं खरतरखड्गधारावदार्यमाणवनकरिनिकरकुम्भनिवहनिरर्गलविगलन्[6]मुक्ताफलकलापमयकरका[7]सम्पातगम्भीरमनवरतवेगस[8]न्निपातजनितामितखड्गझङ्कारघोरगम्भीरनिस्वनं निरन्तरदुरन्तशरधारासारमयमकालप्रलयदुर्दिनमाविरासीत् ॥३५॥

ततश्च मुहुर्मुहुरितस्ततः पलायमानानां वृकवराहवारणवानरवनविडालवञ्चकव्यालवनमानुषवयसां कोककुम्भिकण्ठीरवकालसारकुम्भीनसकाद्रवेयाणां चमूरुचमरीचीनमुखमृगमहिषमहामातङ्गानां शृङ्गखुररदनवदनघोणाघनघनघर्घर[9]घुत्कृतिचीत्कृतिहुङ्कृतिविचित्रध्वनिमयसमुचितं विचित्रङ्किमपि कल्पयामास भूवलयम् ॥३६॥

अनन्तरञ्च प्रचुरशरसञ्चारविध्यमानेषु सारङ्गसङ्घेषु, खरतरखड्गलताखण्डयमानेषु च खड्गमण्डलेषु, श्येनमुखपतत्रिचञ्चुचरणाघातपात्यमानेषु च पतगेषु, प्रचुरकुन्तकृपाणकाण्डमुखहेतिहन्यमानेषु महावराहमहिषमातङ्गेषु ज्वलज्ज्वलनज्वालाजालभीषितेषु च, जालपतनसंयम्यमानेषु शशकशल्लकीशम्बरशालावृकेषु, झटिति महाकाननान्निःसरन्तमतिपवमानमानसरंहसं विकचपद्मपद्मरागनवपद्मबान्धवमरकतमहेन्द्रनीलहेमहीरहरिदश्वोपलहिमकिरणमणिहारहारिविचित्रचित्रमयकान्तकान्तिच्छ[10]टाच्छु[11]रितदिग्व-

1. Ms. ०श्वी० 2. Ms. ०व० 3. Ms. ०ज्ज० 4. Ms. has one redundant व after प्रभ 5. Ms ०नमय० 6. Ms. ०मु० 7. Ms. ०म० 8. Ms. ०वन्धि० 9. Ms. ०च्यु० 10. Ms. ०छ्छ० 11. Ms. ०छु०

लयं, जाज्वल्यमानविलोचनयुगलतरलतारकान्दोलनेन दिवापि तारकामयमिव मुक्ताफलमयमिव व्योमा[व]काशवलयं वितन्वानम्[1], अतितरविजृम्भमाणमहावेगतया गगनतलमात्रसञ्चारमिव दृश्यमानं, महेन्द्रचापचयावकीर्णमिव तडिल्लतापुञ्जसञ्छादितमिव नभो दर्शयन्तम्, अम्बरकासारसलिलपिपासयोत्प्लवन्तमिव, निरपराधबाध्यमाननिजान्वयस्य महाराजस्याविनयमावेदयितुं चराचराधीश्वराय गोलोकतलोत्पतनाय कृतोद्यममिव[2], मयीदृशरूपगुणगरिमशालिनि किमिति हरिणान्तरमपि पीयूषकिरणाङ्कमारोहतीति हिमकिरणाङ्कमिवोद्दिश्य[3] कृतोत्पतनं, भूवलयसमग्रतृणरसमास्वाद्य नन्दनवनघासप्रयासतया महेन्द्रनगराय कृतप्रयाणमिव, विविधमनोह[ा]रिकिरणधोरणीदेदीप्यमानं पश्चिमाशाभिमुखमभिद्रवन्तं महामृगन्ददर्श ॥३७॥

ततश्च समन्तादित[4] इतस्तत[स्ततः]पुरतः पुरतः पश्चात्[पश्चात्] वामे वामे सव्ये सव्ये ऊर्ध्वमूर्ध्वमहो नेक्ष्यत[5] इदानीमहो निभृतमालोक्यतामर्ककिरणजालान्तरिततया दुरालोकतामावहतीति सत्यं सत्यमयमयमित इतः कुतः कुत इति भाषमाणानां निवृत्तमृगान्तरानुसरणानामतितरप्रयत्नविहितपार्ष्णिकशाङ्कुशपातद्विगुणितजवपत्र[6]-तुलितचतुरतुरगकरिसञ्चारिणामूर्ध्वावलोकननियोजितजननिवहा[7]वेदिततादृशगमनसरणीनां धावनवेगश्रमजनितातिशयितक्षुत्पिपासाक्षामकण्ठानां तदासादनमहाव्रतसम्पादनविषयमात्रसमुत्कण्ठानां धावतां महावीराणां खनखनायमानतुरगखुरनिस्वनेन श्रमभरखिन्नवाहसफेनफ्रोत्कारतारतरनिनदेन वेगवशाद्विसंष्ठुलचपलचर्म[8]चन्द्रहासचापकवचविशृङ्खलाप्रेङ्खोलनजनित[9]झनत्कारघोरनादेन बधिरीकृतमिव चराचरन्तस्थौ ॥३८॥

---

1. Ms. ०न्ना० 2. Ms. ०वा 3. Ms. ०द्द० 4. Ms. ०स्ता० 5. Ms. ०क्ष० 6. Ms. ०ल० 7. र्ध्वा 8. Ms. ०ष्ठु० 9. Ms. ०न०

संवृत्ते मृगयाविहारकुतुके श्रीचित्रसेने नृपे
मन्ये तन्मुखनिर्जितामृतरुचेरातङ्कलोलाङ्कतः ।
प्रभ्रष्टोऽयमतीवशङ्कितमनाः सारङ्गशावो महा-
वेगो धावति विष्णुधामनि निरातङ्कं पदं प्रार्थयन् ॥५२॥

अथवा

एतस्मिन्नतिनिर्दयं नरपतौ श्रीचित्रसेने मृगा-
नुच्चैर्निघ्नति तद्यशोमुखपराभूतं विलोक्याश्रयम् ।
पीयूषांशुसमाश्रितो मृगशिशुस्तस्माच्च्युतः शङ्कया
शङ्के धावति विष्णुधामनि निरातङ्कं पदं प्रार्थयन् ॥५२॥

अपि च

एतस्मिन्मृगयारतौ नरपतौ श्रीचित्रसेने मृग-
श्चित्रश्चित्ररयस्तनोति परितश्चित्रा गतीश्चित्रदृक् ।
एतद्वेगवपुर्विलोलन[1]चमत्कारान् समालोकयन्
लोको विस्म[यवि]स्मृतान्यवि[ष]यश्चित्रायते सर्वत[ः] ॥५३॥

एवमनेकविधानि तत्र काननकेतनकविनिवहसमुच्चारितानि समाकर्णयन्नाकर्णपूर्णशरासनमण्डलमध्यारोपितसायको धरणिनायकोऽपि तमतिधावन्तमनुधावन्, विडम्बयन्निवा[2]ङ्गीकृतसारङ्गशरीरं सरोजसम्भवमनुधावन्तं शशाङ्कशेखरं, महीदुहितृमोहनाय मायामयमनोहरमृगमूर्तिं मारीचमनुधावन्तं भगवन्तं श्रीरामचन्द्रमिवा[नु]कुर्वाणः, मदनोन्मादवशान्मै[3]थुनाय मृगमूर्तिधरं मुनीन्द्रमनुसरन्तं मनुजराजं विचित्रवीर्यं वैचित्रवीर्यमिवानुकुर्वन्,मृगरूपधर[4]मतिद्रुतविद्रुतं द[5]क्षाध्वरमनुविद्रवन् रुद्रानुचरो वीरभद्र इ[व],

1. Ms. has one redundant क after विलोल 2. Ms. ०रा०
3. Ms. ०न्या० 4. Ms. ०ध्व० 5. Ms. ०मु०

अरणीस[म]न्वितमन्थदारुहारिणं हरिणमनुसरन् धर्मराज इव, अतीतसमस्तसामन्तचक्रः, शक्र इव क्षीरनीरधिसम्भवमर्वन्तमुच्चैश्रवसमधिरूढ उच्चैस्तरां त्वरयंस्तुरङ्गमराजम्, अनालोचयन् लोचनपथवर्तीन्यपि नानाजनपदजनगणनगरविपणिभवनोपवनविटपिपटलपरिपाटीपल्वलपुष्करिणीसरित्सरसीसरसीकृतानि वर्त्मा[1]नि, तन्मृगरूपरयविलोकनव्याकुललोललोचन[ो] विस्मयविशेषचमत्कारभारमन्थरमानसः सुदूरमनुसरन्नविज्ञातानेकशतयोजनमात्रमध्वानं विलङ्घयामास ॥३९॥

अथाविश्रान्तातिमहाजवपवमानायमानतुरङ्गममात्रद्वितीयस्याद्वितीयमहिममहनीयस्य महीमहेन्द्रस्याभूतचरं श्रमभरमालोक्य परमकारुणिकतया भक्तवत्सलतया च रोषा[वे]शारुणित इव सहायतामिव कुर्वाणः पश्चिमाशाभिमुखमभिद्रवन्तन्त[ं] प्रति सारङ्गं प्रजवितसप्ताश्ववेगद्विगुणसमाकृष्यमाणस्यन्दन इवाभिधावन्न[2]ग्रेसरो भगवान् सहस्रकिरणोऽपि झटिति पश्चिमाचलशिखरसीमामवाप ॥४०॥

अथ चरममहीधरशिरःसरसीताम्रसरसीरुहे महति मिहिरमण्डले मुद्रामिवोपगच्छति सुविततकिरणपटले[3] [4]शतदलसहस्रसङ्कोचभाजि, माध्वीकपाननिराशतयेव तत [5]उड्डीयाशान्तरान्तरान्तरालमवलम्बमानेषु [6]ज्वलिष्यत्प्रोषितपतिकादुरन्तदुःखदवदहनधूमायमानेषु तिमिरसमाजव्याजरोलम्बकदम्बेषु, चतुरदूतीजनसङ्केतोदितसङ्केतकेतनसंक्रान्तकान्तोदन्ततया स्फुरितनितान्तसन्तोषसन्तानतरलहृदय[ा]स्वभिसारिकासु, सुचिरसहवास[7]प्रेमपरम्परापरिचितचक्रवाकतरुणीनववियोगदुःखदर्शनादिव म्लानि[मु]पप्रयान्तीः पद्मिनीरपहाय [8]सहासकुमुद्वतीरभिधावत्सु मधुप-

1. Ms. ०र्म्मा० 2. Ms. ०म० 3. Ms. ०ल 4. Ms. छुल० 5. Ms. ०ड्डी० 6. Ms. ज्यनि० 7. Ms. ०म्प्रे० 8. Ms. म०

समूहेषु, स हरिणयुवा सहस्रकिरणेनैव[1] समश्चरमगिरिगुहामतीत्य लोचनपथं प्रविशन्निवान्तर्धानमियाय ॥४१॥

अतीते च तस्मिन् हरिणे[2] लोचनसरणिं, सङ्कुचितसमस्त-किरणकलापे च भगवति मयूखमालिनि, समन्तात् सञ्चारितदृष्टि-प्रसरो नरपतिरनवलोक्य च तं मृगमालोच्य च वासरावसानसीम-समयं मृगयाव्यापारनिवृत्तवृत्तिरन्तरीक्षतोऽपि[3] निराकृतनेत्रसञ्चारः समन्तात् समासन्नभूमीवलयमवलोकयामास ॥४२॥

सं[गत्या]पि करैः सुधासहचरैः शीतैः कलानां निधेः
संयाते चरमाचलस्य शिखरं चण्डत्विषि[4] प्रेयसि ।
एषा संमलिनीकरोति नलिनी भावं स्वभावाद्भुतं
कर्तव्या कृतिभिः प्रसन्नमतिभिर्मैत्री पुनस्त्वीदृशी ॥५४॥

अपि च

चक्रीर्मुञ्चति चक्रवाकनिकरे भृङ्गेषु पद्माटवी-
र्मौनं मानवतीषु पान्थनिवहे सञ्जीविताशामपि ।
दैन्येनातिदयार्द्रभावजनुषा भूमीरुहाः प्रोच्चकैः
क्रन्दन्तीव कुलायलीनवयसां रावैस्तुषाराश्रुभिः[5] ॥५५॥

किञ्च

सुस्नाताः सरसीसरित्सु कुसुमान्याहृत्य[6] भूमीरुहां
तन्वानाश्च[7] दिगम्बरार्चनविधिं क्षामास्तपोभिः किमु ।
प्रोच्चैःपूरितवेणुरन्ध्रमधुरध्वानैर्यशो धूर्जटे-
र्गायन्तीव शनैर्नटन्त्यपि जगत्प्राणाः समन्तादमी ॥५६॥

---

1. Ms. ०ने०  2. Ms. ०ण  3. Ms. ०त्र०  4. Ms. ०द्वि०
5. Ms. वावैस्तुषाराश्रुतिः ।  6. Ms. ०कृ०  7. Ms. ०म्वाला०

जातीचम्पकमालतीस्तरलयन्[1] मल्ली: समान्दोलयन्
धुन्वन् केतककेतकीकुरुवकान्यास्फालयन् यूथिकाः ।
कान्ताकान्तवधूमुखाम्बुजमधून्यास्वादयन् कैरव-
श्रेणीरेणुविलुप्तदृष्टिरनिलो मन्दां गतिं विन्दति ॥५७॥

श्रीखण्डाद्रितुषारभूमिधरयोः संवादसंवेदको
दूतोऽयं पवनो गतागतवशान्मन्ये गत[ः] क्षीणताम् ।
गङ्गाद्वारसमुद्रसङ्गममहातीर्थावगाहान्महा-
पुण्योऽप्येष निहन्ति किं विरहिणीः पद्माटवीलम्पटः ॥५८॥

समन्तात् सन्तापं शमयति वसन्तानिलसखः
सुधांशुः सम्पूर्णः[3] श्रवणमधुरः कोकिलरवः ।
तदाशु श्रेयस्ते गमनमतिदूरङ्गिगमिषो-
स्तमःपुञ्जे कुञ्जे क्षणमिह न वासः समुचितः ॥५९॥

इत्यादीनि तत्तद्देशनिकायतत्तदवस्थमध्यस्थजनसमाजभणिता-न्याकर्णयामास ॥४३॥

ततश्च तत्र सायन्तनविधेयसन्ध्यावन्दनपरदैवतचरणसरोज-मननमनुजपनप्रणमनमनाः[4] श्रमापनोदनार्थावगाहनसलिलपानाशया सलिलाशयमन्वेषमाणो मुहुर्मुहुरितस्ततो विस्फारितलोचनश्रवण[ो] निगृहीतरश्मिः शनैः शनैस्तुरगारूढ एव समन्ततो बभ्राम ॥४४॥

परिभ्रमंश्च प्रावृषेण्याम्भोवाहव्यूहगर्जितगम्भीरभूरिभैरवरव-सोदरं सलिलावगाहनप्रवृत्तगहनचरमत्तमातङ्गयूथान्दोलिततरल-कल्लोलझात्कृतिवनवराहनिवहघोणाघुत्कृतिमृगराजमृगादनभल्ल-[5][6] गण्डकपुण्डरीकगणघनघनघर्घरनिनादनिकरं भरितसमीपशैलगुहा-कुहरं प्रतिध्वानसम्पूर्यमाणरोदसीविवरं शुश्राव[7] ॥४४॥

1. Ms. ०वन० 2. Ms. ०राः 3. Ms. ०या० 4. Ms. ०र्या० 5. Ms. ०व्या० 6. Ms. ०गदे० 7. Ms. ०य

तेन सत्वरमाहूयमान इव पुरतो हिन्तालतालतमालतालीप्रायैः, एकतश्च शिंशपाशिरीषशाल्मलिशालशल्लकीसरलसहकारसिन्धुवार-सर्जार्जुनाञ्जन[1]बहुलैः, अन्यतश्च काञ्चनकुरुवककदम्बकुटजकङ्कोल[2]-किरात[3]केतककुन्दमुचुकुन्दकक्कोल[4]क्रमु[क]कालागुरुकङ्केल्लिकुदु[5]म्बिन्येरकाभूयिष्ठैः, अपरत्र च लवलीलवङ्गलोध्रपनसपलाशपीतशाल-पाटलिपुन्नागनागकेशरपिप्पलीप्रियङ्गुप्रधानैः, निरस्तचन्द्रार्ककर-प्रवेशैः पातालतलैरिव, सलिलाहरणार्थमागतैर्महामेघसमूहैरिव, निरवधिविविधफलपल्लवभारभूषितविश्वम्भरैर्महाभागवतैरिव, निरन्तरफलकुसुमसन्तानसन्तोष्यमाणशाखाचरणविन्यस्तनिश्चलहृदय-श्रुतिमधुरध्वाननिपुणद्विजसमाजैर्महाधार्मिकैरिव, प्रभाकररथपथ-रोधनाय गगनमुत्पतद्भिर्विन्ध्याचलशिखरैरिव,महामहीरुहैः श्यामायमानमतिप्रमाणं नयनपथातीतसीमानं चतुरस्राकारं सारमिव वसुन्धराया द्वीपविशेषमिव भूखण्डं ददर्श ॥४६॥

ततश्च सुविमलशिशिर[6]सलिलशीकरासारशीतलेन कमलकुमुद-कुवलयकह्लारहल्लकमुखकुसुमसञ्चयमाध्वीकमधुरेण तीरतरुतनुतर-कुसुमसञ्चयसञ्चारणचतुरेणाभ्या[7]गतमहीपतिसभाजन[ा]य प्रेरितेनेव दूतभूतमारुतेनालिङ्ग्यमानः, नीरतीरभूरुहनिलयसारसकलहंस-कारण्डवकोककङ्कलविङ्क[8]कुररकेकिकोकिलकोयष्टिककु[9]क्कुटककुभ-कपोतकपिञ्जलादिद्विजकुलमञ्जुलकलकलकोलाहलैः स्वागतप्रश्न-पुरस्सरं सादरमाहूयमान इव, मृगमृगराजमृगाद[10]नवानरवराहवारण-वञ्चकवृषवृषदंशहंससारसवकजीव[11]ञ्जीव[12]कचमूरुचमरीचीनचातक-चरणखुरन[ख]राङ्कपङ्कपङ्कजशैवलमृणालकुवलयकुमुदकह्लारैः सम-

---

1. Ms. ०ञ्च० 2. Ms. reads कैङ्किशो in place of कङ्कोल
3. Ms. ०क० 4. Ms. reads कर्केकाल in place of कक्कोल
5. Ms. ०कुतुम्बीचैरक० 6. Ms. reads शिषिशिर instead of शिशिर
7. Ms. ०ख्या० 8. Ms. ०ङ्ग० 9. Ms. ०क० 10. Ms. ०गदे०
11. Ms. ०र० 12. Ms. ०म०

न्ततोऽवकीर्णैरनुमीयमानाम्, अतिसरलशल्लकीशालदेवदारुपिप्पल-पनसपलाशरसालपीतशालतमालतालखर्जुरार्जुनाञ्जननारिकेलकक्कोल[1]-क्रमुकमुचुकुन्दचम्पकजम्बीरजम्बूकदम्बपुन्नागनागकेशरप्रमुख-तरुगणतरुप्रचयमयवीथीद्वयमध्यनिकायभूतशिशिरच्छाया[2]मनोहरभू-भागविरचितसुचिराच्छस्फ[3]टिकमयदेदीप्यमानवितानाम्, पदवी[ं] सु[4]दवीयसीमवलोकयामास ॥४७॥

ततश्च तदनुसरणेनासादितावकाशो दूरादेव पारदरसधारामय-महाभुवनविता[ना]यमानशारदराकारोहिणीरमणकिरणधोरणीविद्यो-तमानं सुधौतसूक्ष्मचीनांशुकाच्छादितमिव नारदशारदाशङ्करसङ्कर्षण-शेषसोमशरीरसमूहसम्बाधं सुधापूरप्लावितमिव सौधसन्दोहमति-विशदतया पाण्डरतन्तुसन्तानमिव निरूप्यमाणं निपुणनिपुणमपि निरी[5]क्ष्य मुहुर्मुहुरतिमात्रविवर्धमानकुतूहलतया वितर्कयामास ॥४८॥

समुपजातकुतूहलश्च प्रजविततुरङ्गमो निमेषमात्रेण तम्प्रदेश-माससाद ॥४९॥

ततश्च निखिललोकपालभवनोपान्तसीमापर्यन्तसन्ततान्तरालसान्त-रीक्ष[क्ष]मामण्डलमण्डनायमानम्, प्रचण्डपवनदोधूयमानम्, अखण्ड-पाण्डरपटमयमहामण्डपमिव, द्रवितसुधौतकलधौतधारासार[6]मय-महासागरमिव, भूतिभरभूषितभैरवभूतनाथभवानीगुरुभूधरभारती-भानुभरभरितमिव, शङ्करसङ्गीतश्रवणद्रवितचराचरकारणमयकारण-नीरपूरमिव, सरोजन्मजन्मभूमिभूतमहासरोजकाननप्रभवभवनमहा-सरोवरमिव, महाप्रलयविशेषप्लवमानक्षीरोदमयैकार्णवपयःप्रचय-मिव, त्रैलोक्यनाथसम्प्रदानकनिरुपधिभुवनत्रयसम्प्रदानसम्पादिता-नुक्षणोपचीयमानम्पातालतलादुत्तिष्ठमानं दानवनिकरशिरोमणि-वैरोचनियशःप्रवाहमिव, भूतभर्तृभवनभूतभूमीधरभुजगभूपालयो-

1. Ms. reads ककेकाल in place of कक्कोल  2. Ms. ०रे छा
3. Ms. ०स्फु०  4. Ms. स०  5. Ms. ०त्री०  6. Ms. ०रा०

मिथः स्पर्धया धावन्निज[निज]धामधाराधोरणिमयमहासिन्धुद्वन्द्वसम्भेदमिव, ऐन्द्रजालिकविद्यामयमिव[1] गोचरीक्रियमाणभुवनत्रयवृत्तान्तं,समीरसञ्चार्यमाणनीरशीकरकदम्बतया सुविमलविपुलमुक्ताफलज[ा]लमयानीव[2] दिक्पालभवननोरणानि तन्वानम्[3], आश्चर्यज्योतिश्चक्रमिव तुलाविहीनम्, अनादिपुरुषचरितमिव मीनकूर्ममहावराहानेकविक्रमनरहरिरामलक्ष्मणावताररमणीयं शङ्खचक्रगदाभिरामं मकरकुण्डलिकमलालङ्कृतमनन्तभुजगराजभोगपर्यङ्कञ्च, सौरभविशेषानुमीयमानभ्रमरसञ्चयसञ्छादितप्रकाण्डशतसहस्रपत्रपुण्डरीककैरवगहनं, कोककामिनीकुलकुलायभूतनवीननीरजबान्धवबिम्बकदम्बायमानकोकनदकाननं, निर्विशेषरूपत्वेन[4] नेत्रानिर्णेतव्यविशेषतया कलरुतमात्रानुमीयमानाचञ्चलचञ्चरीकसञ्चयसमुपचीयमानमहानीलोत्पलगहनं, सुरतसम्भोगपरिश्रमापनिनीषुपुरन्दरपुलोमजापीयूषपूरपानोत्तराचमनावकीर्णतत्तत्करतलगलितामृतशेषलेशमन्दारहारव्यतिकरवर्धितनिसर्गहारिपरिमलसम्भारभारमन्थरतया[5] साहङ्कारैरिवाव्यामोहनिजनिजनिकेतनावस्थानावस्थयैव[6] निष्पाद्यमाननिरन्तरनीरनिर्वाहणीयावगाहनसन्ध्योपासनतर्पणपानाचमनादिभिः सनकादिभिर्मरीचिमुखैः सप्तर्षिभिराशीभिरभिसंवर्ध्यमानैरिव तत्तत्करतलविगलितकुशकुसुमाक्षतदूर्वाकिसलयसनाथैर्गोलोकसुखोषितसुरभीप्रमुखगवीपिपासाखेदापनोदनस्नपनसंक्रान्ततत्पयःपूरतद्गतस्वमुखफेनपिण्डातितरमधुरपाण्डरसुरभीकृतैः[7] स्वामिसम्बन्धनिबन्धनिबन्धनातिप्रेमसाध्वसवशादिव पाशपाणिभवनावरणमहाप्राकारतया परिण[म]द्भिर्महातरङ्गैरुद्द्योतमानं[8], हैमवतीस्तनयुगलमिव गजेन्द्राननास्वाद्यमानपयोधरं, कामिनीहृदयमिव स्फुरन्मकरकेतनम्, अनेकधा पितामहमाधवमहेशमाहेश्वरीमिहिर-

1. Ms. ०विद्यानमय०    2. Ms. ०जला०    3. Ms. तन्नानां०
4. Ms. ०र्णि०    5. Ms. ०मा०    6. Ms. ०व अ०    7. Ms. ०स्न०
8. Ms. ०द्यो०

मातङ्गमुखमहासेनमन्मथमहेन्द्रमारुतमुखमरुन्मण्डलीमन्त्रमुखराव-गाहनमज्जनोन्मज्जनलीलापुरस्सरपरस्पर[1]विरचितरुचिरकरयन्त्रनिःसार्यमाणनीरधारासहस्रसन्ताडनसन्तरणसन्ध्योपासनमननपरिपूजनध्याना[2]ध्ययनविधानातीर्थ[3]तीर्थकृतं, राजसूयाध्व[4][र]राजदीक्षितद्विजराजत्रिसवनावगाहनसंक्रान्तत[द्]ङ्ग[5]सङ्गलितामृतसारसञ्चारस्वादुस्वादुतरीकृतपयःप्रवाहम्, अनेकशतसंवत्सरनिर्वाहणीयव्रतव्रातनिर्वाहणाय सवालिखिल्यसप्तर्षिसनकादिभिश्चिररात्रोषिततीरालङ्कृत[स][6]त्त्वसु[7]मृष्टसन्ततनिस्तमोरजस्कभवनोपवनं, दाक्षायणीविरहदूनमहेशदेहदाहमहौषधीभूतनीरशीकरासारकैरवपुण्डरीकदलमृणालशैवलतीरपादपालवालं, क्वचन श्रीभ[ा]गवतमहापुराणमिव दलितकुवलयापीडवकधेनुकतृ[8]णावर्तकृष्णसारचरितं, क्वचन सच्चिदानन्दमयमिव परमहंसास्वा[9]द्यमानरसमद्वितीयं देदीप्यमानमन्तः[10]प्रतिबिम्बितविश्वप्रपञ्चमपारमविकारञ्च, क्वचन पार्वतीवदनबिम्बमिव नीलकण्ठास्वाद्यमानपीयूषाधिकपरमरसधारं, चित्रलेखाप्सरोविरचितमहाचित्रपटवितानमिव, स्फुटतरोपलभ्यमानसपरिकरेङ्गि[11]ताकारचतुर्दशभुवनभवनोपवनवृत्तान्तं, पारावारमिव प्रबलतिमि[12]तिमिङ्गिल[13]महामकरकुम्भीरशिशुमारम्, अन्तरुल्लासितानन्तपुण्डरीकलोचनं, प्रकटितविराटमूर्तेरिव भगवतो नारायणस्य कायच्छाया[14]वलोकनविपुल[ा]दर्शमण्डलं[15], सिद्धसाधनस्थलमप्यदूषणावकाशं, निखिलव्याप्तिमत्तया निर्णीयमानमप्यसत्प्रतिपक्षमप्यसाधारणं, दृश्यमानबहुवयोविस्तारमपि सुकुमारम्, अतितरलमपि महागम्भीरं, विजृम्भमाणजीवनमपि निरन्तरतरङ्गवाचालमपि मीनकेतनम[16]ञ्जीरचञ्चलाशयमप्यचेतनं, निजनिजाशावस्थितैरेवाशास्तम्बेरमैः सुख-

1. Ms. ०स्प० 2. Ms. ०ध्या० 3. Ms. ०र्था० 4. Ms. ०ध० 5. Ms. ०सङ्गलितताामृत० 6. Ms. ०त्व० 7. Ms. ०सृ० 8. Ms. ०दृ० 9. Ms. ०स्वा० 10. Ms. ०स० 11. ०वारेङ्गि० 12. Ms. ०च० 13. Ms. ०न० 14. Ms. ०छा० 15. Ms. ०नं 16. Ms. ०स०

सम्पीयमानसलिलसम्पातं[1], भुवनाद्भुतमदृष्टचरमनाकर्णितपूर्वमपूर्ववृत्तान्तसंघं महातरङ्गं [सत्सङ्गं] नाम महासरः समालोकयामास ॥५०

विलोकनमात्रादेवापगतनिखिलश्रान्तिसन्तानो विगलितनिःशेषनिखिलचिन्तासन्तानसन्तापतया च विशदीभूतान्तःकरणकरणो मुहूर्तमात्रं ध्याननिमीलितलोचनो निश्चलनिर्मलमानसः समुत्पन्नसमाधिरिव कामपि परमामननुभूतचरीम्परमप्रेमानन्दपरम्परासहचरीं निर्वृतिमाससाद ॥५१॥

निर्वृतनिभृतमानसश्च चिन्तितवान्-अहो कोऽयमतिमनोहरोऽयं सरोवरो यदवलोकनमात्रेणैव स्नपिताप्यायितसर्वेन्द्रियान्तःकरणात्मनो विगलितविषमविषयवासनापाशस्य किमपि कमनीयमनास्वादितचरमतिमनोहरमत्यद्भुतमश्रुतपूर्वममृतमिवास्वादयतः सुखमतीव समतीत्य वाङ्मनसयोरध्वानमन्तरुल्लसति ॥५२॥

मन्ये च[2] यास्ताः[3] कलानिधिकला बहुलपक्षक्षपासु हीयन्ते, ताः खलु तत आदायात्रैव महासरसि पुञ्जीक्रियन्ते प्रजापतिना। कथमन्यथा बाह्याभ्यन्तरीणसन्तापसन्तानापहरणानामगणितरसरूपान्तराणामतिमनोहर[ा]णामदृष्टान्तानामीदृशानां पयसां सम्भवः ॥५३॥

शङ्के चात्यन्तमसृणतया लोचनपथेनैव प्रविश्यान्तरान्तरात्मान[4]मपि स्नपयति पाययति निर्वापयति चान्तःसन्तापसन्तानमेतदीयमम्भः ॥५४॥

आलोकयतश्च शोभातिशयमेतस्य सरसः सर्वमन्तर्हितमिव न स्मृतिस्मृ[5]तिमावहति किमपि—क्वचन राज्यं मन्त्रिराजो वा करितुरङ्गरथसेना वा ते ते राजपुरुषा वा नगरोद्यानानि कोषभवनानि वा। न किमपि तादृशप्रेमलेशोऽपि स्पृशति ॥५५॥

---

1. Ms. ०स्म्रा० 2. Ms. व 3. Ms. मा० 4. Ms. ०स्मा०
5. Ms. ०स्मृ०

अन्यच्च—मन्ये शुद्धसत्त्वगुणेन[1] सत्यव्रतेन निष्क[ा]मकलित-पुण्यपुञ्जेन साधुसमूहशीलजालेन च भगवता स्वयमेव नारायणेने-यमुत्पादिता सरसी ॥५६॥

आश्चर्यं यदत्र तिर्यञ्चोऽपि रोषहिंसादिककालिममालिन्यमुक्ता-[2]त्मानो मुक्तात्मान इव परानन्दमयरसधारामास्वादयन्ति। तथाहि विकचपुण्डरीकाणीव पुण्डरीकमुखानि जिघ्रन्ति कृष्णसारशिशवः, प्रफुल्लसारसपत्राणीव सारसप[त्रा]ण्यास्फालयति खञ्जरीटपोतः, दैवताधिदैवतं पञ्चाननमिव पञ्चाननं सिञ्चति पुष्करसलिलेन मातङ्ग-श्चतुर्दन्तं नागेन्द्रमिव नागेन्द्र[ः], शराहतकौशिकः[3] प्रियक्रोडमिव क्रोडमालिङ्गति तरक्षुतरु[णस्य], भगवतो नीलकण्ठस्येव नीलकण्ठस्य कण्ठमलङ्करोति भुजङ्गराजः सहदेवसहोदरनकुलस्येव नकुलस्य मुखं प्रेम्णा चुम्बति, चक्रीजलमानुषयोरपि परमा मैत्री, जलदैवतवनदैव-तयोरपि नितरामिति विचित्रचमत्कारधारावध[ा]रणविस्मापित-मानसं मानसमपि सरो न प्रमा[[4]णे]नेदृशमिति चिन्तितवान् ॥५७॥

किं चास्य सरसो नीरतीरसम्भवानां कुसुमानां सौरभभार-हारिणा शीकरासारसञ्चारचारुशीतलेन परिणतफलकदम्बपातन-निपुणेन निरन्तरतटभुवनशोधनसेचनशीलेन समीरणेनैव निष्पा-दितातिथिसपर्यापर्यायाप्यायितः सुखमिह परममनुभवति पान्थ-सम्प्रदायः ॥५८॥

किञ्च

सम्पूर्णा सरसीरुहैर्निरवधिक्रीडन्महासारसी
क्रीडन्ती वरशीकरैरिव नभोलक्ष्म्या च दिक्पङ्क्तिभिः[5]।
ऊर्ध्वाधस्तनप[ा]रसीमरहिता निस्तुल्यता[मी]युषी
चेतो मे सरसीकरोति सरसी नेदीयसी[6] नेत्रयोः ॥६०॥

---

1. Ms. ०ने०  2. Ms. ०यु०  3. Ms. ०ति०  4. Ms. ०या०  5. Ms. पंक्तिभिः  6. Ms. ०द०

अपि च—अहो आश्चर्यं मम हि मृगतृष्णामिव कामपि मृगयां समभिधावतो मृगयमाणस्य च मृगविशेषं, सरस एतस्यावलोकनक्षणादेव दासीव समग्रप्रपञ्चमयविषयवासना प्रतिभाति, यत् सत्यं श्रीगुरुचरणसरोजप्रसादा एव जयन्ति, तत् सर्वथा कृतकृत्योऽहमिति श्लाघमान एवात्मानमवरुह्य व्यपनीतपर्याणन्तुरङ्गममात्मानञ्च विमुक्तकवचायुधोष्णीषभूषणं विधाय, निधाय च तीरतरुमूलस्फटिकालवालवेदिकायां सर्वं, तुरङ्गमञ्च सरसीमवतार्य स्वेच्छाविहितमज्जनोन्मज्जनम्पीतसलिलमपि निजकरकमलविरचिताञ्जलिपुटसलिलासारेण सरसीकृत्योत्तार्य सञ्जातकोमलतृणसञ्चयशालिनि क्वचन तीरतरुप्रदेशे संस्थाप्य संयम्य च तन्मूलशाखायां, स्वयमपि सरोऽवततार ॥५६॥

अवतीर्य तत्सरःसलिलसंस्पर्शानन्दभरनिर्वृतचेता निःस्पन्दनिमीलितलोचनो[1] मुहूर्तमात्रं तस्थौ ॥६०॥

तत उत्थाय विधाय पश्चिमसन्ध्यावन्दनं निमीलिताक्षः किमपि कमनीयमभिमतमवलोकयन् रूपविशेषं, मुहूर्तद्वयञ्जजाप तुष्टाव च सन्तुष्टमानसः, प्रणनाम च मुहुर्मुहुरपि साष्टाङ्गम्[2] ॥६१॥

कृतसायन्तनकृत्यकलापश्च चिन्तितवान्—अये किमिदानीं विधेयमेषा समुपस्थिता रजनी निर्जनश्चायम्प्रदेशः क्व स्थेयं कथं वा किमासनेन कतमाहारेण वेति ॥६२॥

अनन्तरञ्चामृदुमृदङ्गशङ्खध्वनिसम्वलितनान्दीनादमुखरं कमपि कलमविकलमतिमनोहरं वचनमाकर्णयामास [॥६३॥]यथा—

राजन् स्वागतमास्यतां वनमिदञ्चेदं सरः पूरियं
रम्योद्यानवती प्रपूरितमहाकोषा महासञ्चयैः ।
पूर्णा दैवतसिद्धचारणगणैर्विद्याधरैः किन्नरै-
रत्रैवाद्य सुखं निवत्स्य[सि][3] निजं सर्वं तवेदं ध्रुवम् ॥६४॥

1. Ms. ०लोचननो 2. Ms. ०ङ्ग० 3. Ms. ०र०

अपि च

मूर्तेनैव गुरुप्रसादपरमाभीष्टेन भाग्योदयं
साक्षात्कारमुपेयुषा मृगवराकारेण कृत्वा बलात्।
सत्सङ्गं परमं सरस्त्वमधुना सम्प्रापितस्तत्फलं
सद्यः पश्य पुरीमुपेत्य परमां भक्तिं कृतार्थो भव ॥६२॥

ततश्च केनेदमाभाषितमिति[1] शङ्कमानस्त्वरितमभिधावद्भिर्महामणिमयं ज्वलन्महौषधिमयश्च दीपसहस्रं धारयद्भिरपरैश्च वेत्रपाणिभिः समुद्घुष्यमाणजयशब्दैर्निजनिजकायकान्तिसन्तानवितान्तनिर्भर्त्स्यमानघनान्धकारैः पाद्यार्घ्यपाणिभिरपि कतिपयैरादरावनमितमौलिभिः सविनयमागत्य [भणितं] "स्वागतं महाराजस्य। एषा भगवती सुरासुरदेवब्रह्मर्षिभिरभ्यर्थ्यमाननिमिषार्धमात्रसङ्गा प्रेमलक्षणा[2] भक्तिरुत्कण्ठितहृदया समाकाङ्क्षति[3] त्वदवलोकनाय। तत्त्वरतां महाराज[ः]। इयञ्च नातिदूरे एतस्य सरसः पश्चिमतीरोपवने देदीप्यमाना महामणिमयमहासौधप्र[ा]कारप्रकरमयी[4] चतुर्दशभुवनभवनातिग[परमशोभा] परमशोभा नाम मिहिरहिमकरकोटिकान्तिप्रचयवप्रचया विरिञ्चिवृषभध्वजाभिवाञ्छितवासप्रवेशा निखिलदुर्गमदुर्गसहस्रवलयवती महती पुरी" इति समाकर्ण्य पीयूषसम्पातेनेव तेन सादरसरसाभिभाषितेनाप्यायितमनाः परदैवतधामेत्यनारूढतुरग एवाहूतानुचलिततुरङ्गमो यथाज्ञापयथेति प्रतिगृह्य स्वागतप्रमुखातिथिसपर्यापर्यायमग्रेसरैस्तैरेव दर्शितसरणिः प्रतस्थे ॥६४॥

ततश्चोभयपार्श्ववितनतस्फटिकहाटकरजतालवालवकुलचम्पकरसालशालनारिकेलक्रमुकमयक्रमविरचितवीथीसहस्रप्रत्येकावरणकाञ्चनरजतमरकतपद्मरागमहेन्द्रनीलमयानत्युच्च[5]प्राकारचयविराजमानामविरलसोपानपरम्परां पदवीमासादयामास ॥६५॥

1. Ms. ०माभाषितमिदमिति   2. Ms. ०क्ष्म०   3. Ms. ०ते
4. Ms. ०महतीमणिमय०   5. Ms. ०त्य०

अहो किमियमपूर्वोऽद्य [स]ञ्जातो मम चेतसः प्रसादो येना-
यमन्तरात्मा घनाभ्रं[1]लिहमहामहीरुहव्यूहमये प्रचण्डगण्डपुण्डरीक-
मण्डलभल्लभुजङ्गमभीमभूतसञ्चयसञ्चारघोरतरे महाकानने महामेघ-
मण्डलीविवर्धितदुर्दर्शदर्शनिशीथसमयापादितदिङ्मोहान्धीभूतस्यै-
[2]कलस्यै[व] सञ्चरतः सहसा महासहायभूतसहजबान्धवमहाजन-
समाजमयमहानगरासादनं, क्षुत्तृ[3]ट्क्षामस्य प्रचण्डमार्तण्डसन्ताप-
सन्तापितस्येवाभिमतसुशीतल[4]च्छायभवनपानभोजन[ा]सनशयन-
सम्प्राप्तिः, अदृष्टधनल[ा]भस्येव सहसा स्पर्शमहामणीन्द्रलाभः,
दुर्वासःशापप्रतापभीताया इव पाञ्चालतनयायाः प्रार्थिताहूत-
श्रीकृष्णचन्द्रचरणारविन्दद्वन्द्वसन्दर्शनं, ग्राह[5]ग्रस्यमानस्येव
गजेन्द्रस्य प्रार्थितपरमपुरुषासङ्गः, चतुर्दशहायनोत्तरं श्रीरामचन्द्र-
समागम इव श्रीभरतस्य, वाङ्मनसयोरप्यगोचरमतीवानन्दभरम-
नुभवति । तत् किन्नु[6] खलु प्रभावोऽयं सरसोऽस्य, किं वास्य
प्रदेशस्याहो[7]स्विदेतदधिदेवतायाः, किमथवा भगवत्या प्रेमल[8]क्षणाया
भक्तथा इति सञ्चिन्तयन्तमेवैनमशरीरा वाणी पुनरपि प्रबोधया-
मास ॥६६॥

यथा—

आदौ श्रीलगुरुप्रसादवशतः शुद्धस्वभावं मही-
खण्डम्पश्यति तत्प्रभाववशतः सत्सङ्गसंज्ञं सरः ।
पीत्वैतत्सलिलञ्च याति पदवीं स्वान्तप्रसादाभिधा-
मायासच्[9]युतिमुत्तरोत्तरमहानन्दन्ततो विन्दति ॥६८॥

अपि च

प्रत्यक्षीकुरु भूमिपाल पुरतः सम्पीड्यमानं महा-
भागं कञ्चन कैश्चिदद्य तु समास[10]ङ्गान्महत्यास्[11]ततः ।

---

1. Ms. ०भ्रं० 2. Ms. ०नस्ये० 3. Ms. ०तृ० 4. Ms. ०च्छा०
5. Ms. ०ने० 6. Ms. ०न्न 7. Ms. ०स्वि० 8. Ms. ०द्म०
9. Ms. ०ऽयु० 10. Ms. ०सा० 11. Ms. ०वः

मुक्तप्रायममुक्तवन्धनम[हा]प्रोद्दामकारागृहाद्
घोरात् पथ्यमपथ्यमेव सततं मन्वानमत्याकुलम्[1] ॥६६॥

इत्याकर्ण्य च पुनरतीवविस्मयविस्फारितलोचनः पुरतो विद्योतमानानेकवातायनमनेकविधद्वारमुपरिदोधूयमाननीलपताका[ा]मण्डल[ं] रथाङ्गद्वयालङ्कृतं महारथमारूढमसहायमसारथिमवाजिनमतिमनोहरं सुकुमारं कुमारमतिमहत्यातिजरत्यातिभयङ्करया वज्ञायमाणा[2]तिदारुणारुणनीलशुभ्रकान्तिमहारज्जुत्रितयेन संयतग्रीवं, निष्करुणदारुणेन च शर्वरीचरमिथुनषट्केन निरन्तरप्रहारव्याकुलीक्रियमाणम्, अग्रेसरमहाचञ्चलैकतरमहावञ्चकपुरुषानुयायिभिः पञ्चभिरतिविप्रलम्भकैः परुषपुरुषैश्चातिदीर्घतरातिदारुणदृढपाशैरेकैकशो बद्ध्वा प्रलोभ्य चैन्द्रजालिकविद्योपपाद्यमानघनान्धकारभरितगम्भीरवीभत्सविवरेषु निजनिजाभिमतेषु मुहुर्मुहुरभिनिपात्यमानं,दुर्वारदारुणश्व[ा]पदसञ्चारदुर्गमनिःसीमसुभीमगहने[ऽ]परिमितमधुकुसुमफलच्छायाप्रलोभनेन सञ्चार्यमाणम्, अन्तरा स्यन्दनमन्तरीन्तचरीं समस्तपरमवस्तुस्तोमनिधानभूतां जरामरणक्षुत्पिपासाधिव्याधिनिःशेषनिर्मूलनमहौषधिभूतमकरन्दसन्दोहभरितां जाज्वल्यमानज्योतिर्ज्वालाजालनिरस्यमानवाह्याभ्यन्तरीणदुरन्ततिमिरसञ्चारा-
त्त[3]निद्राम्म्लानि[4]मनश्वरीं महासरोरुहवनीमन्धमिव रत्नदीपावलीमनासादयन्तं [तं] महाभीमान्धतमसे च परिभ्रमन्तं तदानीञ्च सद्यो[5]विमुच्यमानप्रायजरतीगृहीतासितलोहितपाशद्वयतया विवर्धमानपरमानन्दपरम्परापरिचयविस्मयातिशयक्षुब्धमानसमिव विलोकयामास ॥६७॥

तदानीञ्च तत् सर्वमालोकयत एवास्य स्वप्नमयमि[6]वैन्द्रजालिकमयमिव प्रतिविम्बमयमिव निमेषमात्रेण सर्वन्तिरोबभूव ॥६८॥

1. Ms. मन्वान् ममत्याकुलम्   2. Ms. ०जा०   3. Ms. ०त्म०
4. Ms. ०म्ला०   5. Ms. ०म०   6. Ms. ०प्र०

तदनन्तरञ्च तत्रैव—

विश्राम्याद्य पुरे मनोहरतरे श्रीप्रेमभक्त्या महा-
देव्यास्तां प्रणिपत्य तद्विरचितातिथ्येन पूर्णान्तरः ।
तत्कारुण्यवशेन पश्य सविधे विद्योतमानां श्रियं
श्रीवृन्दावनसंश्रयां श्रुतिगिरामत्यन्तदूरे स्थिताम् ॥७०॥

इत्याकर्ण्य च प्रणम्य साममानुषीं गिरं शिरसा बहुमन्यमान एवा-त्मान[ं] कुतूहलभरतरलमानसः प्रचुररोमाञ्चसञ्चयसञ्चारद्विगुणी-कृतकलेवरः शनैः शनैर्व्रजन् पुरतः पुरमालोकयामास ॥६६॥

अपरिचितं रजसा तमसा च हिंसारोषादिभिरप्यखिलदूषण-गोष्ठीभिः[1] सत्त्वगुणेन[2] च बहिर्द्वारप्रकोष्ठसंमार्जनाधिकारपरमप्रीतेन दूरत एव समुपास्यमानं हिमशैलमन्दरमेरुमहेन्द्रगन्धमादनमलय-हेमकूटप्रायसमुच्छ्रायैर्महाप्र[ा]सादैर्मन्दारहरिचन्दनप्रमुखानाममर-महीरुहाणामेकैकमयमहोपवनशतसहस्रापरिमितपरिखापरार्धपरि-पाटीपरिवृतमतिशयितचतुर्दशभुवनं पवनदोधूयमानपताकाशत-सहस्रको[टि]चुम्बितगोलोकभवनं[3] पुरमतिमनोह[र]म्प्रविवेश ॥७०॥

प्रविश्य च प्रतिद्वारनियमितैः प्रतीहारैरुपदिश्यमानमार्गो, वद्ध्वा[4] तुरङ्गममवान्तरद्वारसमीपविटपिमूलशाखायां, क्रमेणाति-क्रम्य द्वारशतकोटीः, कोटीन्दुभानुसङ्काशे चतुर्दशभुवना-द्भुतमहामणिनिकरविराजमानमहासिंहासने नूतनदिव्यशुभ्राम्बर-वितानविद्योतमाने विराचितासनं, सुरासुरसिद्धविद्याधरगन्धर्व-

1. Ms. ०ष्ठा०   2. Ms. ०ह्र०   3. Dr. Eggeling while analysing the poem in his Descriptive Catalogue of Sanskrit Mss. in the India Office Library, wrongly interprets the text here, since he writes "the king fancies himself to go to Goloka."

4. Ms. ०द्धा

गुह्यककिन्नररजनीचरचारणयक्षसुन्दरीभिः शतसहस्रकोटिपाण्डर-चामरैर्वीज्यमानचरणसरोजां, रजतमहारजतमौक्तिकमरकतपद्मराग-हीरकमहेन्द्रनीलमुखमहामणिनिवहविरचितविविधालङ्कारस[1]ञ्चार-हारिदेदीप्यमानमहावयवां सुधासुधाधाम[क]राधिकधवलाम्बरा-मचिन्त्यमहामहिममहनीयाममृतमयीमिव परमप्रेममयीमिव सु-षुप्त्यवस्थामयीमिव परब्रह्मानन्दसन्दोहसाक्षात्कारधारामयीमिव निखिलजनाखिलमनोरथमयीमिव वासवविरिञ्चिविश्वेश्वरमुखमुख-पङ्कजोदीरितस्तुतिशतसभाज्यमानाम्परमपु[रु]षार्थसार्थाधिकार्थप्रद-पदकमलाममलाकृतिचरिताम्भगवतीम्प्रेमभक्तिन्ददर्श ॥७१॥

ततश्च तत्तत्परमपरमाभीष्टपदार्थसार्था[1]वलोकनानन्तर[ं] तत्[2]-क्षणादेवोत्तरोत्तरविवर्धमानप्रवलपुलकास्रधारासारसञ्चारगद्गद-स्वरं कृताञ्जलिपुटः साष्टाङ्गप्रणतिस्तुतिसन्ततिभिः सपरिजनान्देवी-मतिसन्तोषयामास ॥७२॥

सन्तोषितमनसा देव्या स्वयमुत्थाय प्रणामपतितं[3] भूमिपति-मुत्थाप्य दृढञ्च परिष्वज्य निर्भरनिःसीमपरमानन्दधाराप्यायितान्तः-करणं निस्पन्दसर्वावयवं मूर्छितप्रायं निजसिंहासनसविधे समुप-वेश्य समाश्वास्य च परिजना[4]हृतैः पीयूषाधिकस्वादुभिरपूर्वफल-मूलादिभिरमृतशिशिराधिकसुमधुरशीतलैश्च सत्सङ्गसरःसलिलैः सन्तर्पयामास ॥७३॥

असौ तु देव्या स्वयमुपनीतानि तान्यनास्वादितपूर्वाण्यास्वाद्या-सादितपरमतृप्तिरुत्थाय गत्वा वहिराचम्य पुनरपि देव्याः समीप-माजगाम ॥७४॥

---

1. Ms. ०सा० 1. Ms. ०र्था० 2. Ms. लक्षणाधिकोत्तरविवर्द्धमान०
3. Ms. ०एडा० 4. Ms. ०मा०

ततश्च देव्या[ः] पर्यङ्कसमीपोपकल्पिततल्पान्तरे[1] तदनुरोधवशात् विनयतरेणार्तीवसङ्कुचितकलेवरो निषसाद ॥७५॥

तथा समासीनञ्च निजकरकमलेन लालयन्ती सप्रे[म]स्मितमित-मधुराक्षरमुवाच महादेवी यथा–"महाराज,मुक्तोऽसीदानीन्दारुणेभ्यः संसारपाशेभ्यः। अनादिजनिकोटिभिरनुशीलितास्मि भवता। मम तु भवानतीवप्रेमपात्रम्। अयञ्च पीयूषपाण्डरद्युतिमनोहरो[2] महारयो हयस्तेनैतेन पवमानमपि[3] न समानतया गणयामि किमुतैरावतमुच्चैः-श्रवसं वा। इममतिदवीयांसमसुलभममरसमाजस्यापि[4][5][6] मदीयाश्रम-मनेनैवातिरंहसा सम्प्रापितोऽसि। नातःपरं निमिषार्धमपि विना भवता स्थास्यामि। त्वमतःपरं मयैव सहारुह्य मम महाविमानमनेन हयोत्तमेन संयोज्य सुखं विचरिष्यसि। श्वस्तु भवन्तं श्रीवृन्दावनं दर्शयिष्यामि। त्वमिदानीमत्रैव तल्पे सुखस्वापमुररीकुरु"। इत्या-कर्ण्य सप्रणामाञ्जलिर्यथाज्ञापयति भगवतीति तच्चरणतलोपरचित-शयने सुष्वाप ॥७६॥

अनन्तरञ्च पूर्वाशासम्भोगसंक्रान्तसिन्दूरकुङ्कुमलाक्षारसलोहि-[7]तायमाने[8] भगवत्याशारमणे, मानवशान्म्लानचन्द्रमण्डलमुखायाम्पश्चि-[9]माशायां प्रमुक्ततारकानिकरव्याजकण्ठहारमुक्ताफलकलापखचित-[10]गगनाङ्गनायां, नीहारनीरविन्दुनिवहव्याजतदस्रकणजालस्तिमिते च महीवलये, कलहंसकोकिल[नील]कण्ठकलण्ठभाषितमिष[त]दीय-रोदनध्वाननिकरैर्भरिते च रोदसीविवरे, वहिर्द्वारप्रकोष्ठावस्थित-[11]साध्यसिद्धविद्याधरचारण[ग]न्धर्वैरुद्गीयमानेषु च देवीस्तुति-पुरस्सरजयशब्दमिश्रितप्राभातिकमङ्गलेषु, [मही]महेन्द्रः शयना-

1. Ms. ०न्ते०  2. Ms. ०रा०  3. Ms. ०र०  4. Ms. ०द्०
5. Ms. ०भि  6. Ms. ०मऽ०  7. Ms, ०न्ते०  8. Ms. ०न०
9. Ms. ०न्मास०  10. Ms. ०यु०  11. Ms. ०के०

[1] दुत्थाय विहिततत्समयविधेयसपर्याविशेषः प्रणम्य च भ[ग]वत्यै[2] विधाय चानन्तरकरणीयानि सहतुरङ्गमः सत्सङ्गसरःसमीपमाजगाम ॥७७॥

तत्र चादृष्टचरमहामनोहररूपावयवान् प्रकटितविद्योत[3]मानातिमहःसमूहानुमीयमानमहाप्रभावान् वगाहनार्थमागतान् सुरासुरसिद्धविद्याधरकिन्नरगन्धर्वचारणान् समालोकयामास प्रणनाम[4] [5] तुष्टाव च मनसैव ॥७८॥

तैरपि सप्रेमादरस्मितमधुरभङ्गीभिः सभाज्यमानो निभृतमात्मगोष्ठीषु संकीर्त्यमानकुलकलापकौशलकीर्तिकर्तव्यविशेषः कृतावगाहनसन्ध्यावन्दनतर्पणपरदैवतपरिपूजन उत्थाय पुनरप्यागत्य देवीसकाशं तामपि पुष्पाञ्जलिभिरभ्यर्च्य कृतप्रदक्षिणप्रणामस्तुष्टाव ॥७९॥

सन्तुष्टया च तया निर्भरम्परिरभ्यमाणस्तदाज्ञया विहितपर्याणन्तमेव तुरङ्गमं तस्या विम[ा]नराजे संयोज्य देदीप्यमानमतिरमणीयन्तमेव देव्या सह समारुरोह । ततश्च वियति[6] शङ्खमृदङ्गभेरीनिनदपुरस्सरजयशब्दसम्वलितमङ्गलवचनानि शुश्राव ॥८०॥

निरन्तरनिपतितकुसुमासारमप्यालोकयामास [॥८१॥]

ततश्च तुरगराजरयजनितमहावेगेन विमानराजेन व्रजन्तमवनीपतिं तत्तद्देशप्रदेशान् सविशेषान् विज्ञापयामास भगवती ॥८२॥ यथा—

राजन् गौडमहीमतीत्य पुरतः पश्याङ्गदेशो महान्
एषा चम्पकमालिनी च नगरी कर्णस्य यासीत् पुरा ।
देशोऽयं मगधो विभाति पुरतो यस्मिन् गया गण्डकी
पुण्या चापि पुनःपुना विजयते भूलोकनिस्तारिणी ॥७१॥

---

1. Ms. ०दण्ड्याय 2. Ms. ०त्ये 3. Ms. ०दूद्यो०
4. Ms. प्रणमानाम 5. Ms. ०ष्ट्या० 6. Ms. ०म०

क्षेत्रं हारिहरं वदन्ति कृतिनः श्रीगण्डकीगङ्गयोः
सम्भेदं सुरसिद्धचारणगणैः संसेव्यमानं पुरः ।
अस्यैवोत्तरतो विभाति मिथिला नात्यन्तदूरे स्थिता
यस्यां श्रीयुतरामचन्द्रमहिषी प्रादुर्बभूव स्वयम् ॥७२॥

शोणम्पश्य महानदं नरपते तीर्थं महापावनं
पादं विन्ध्यमहीधरस्य विततं वामे समालोकय ।
धर्मध्वंसकरीं न[दी]ञ्च पुरतस्तां कर्मनाशां बुधा
याम्पश्यन्ति महाधियः समदृशस्तीर्थं महापावनम् ॥७३

तीर्त्वैनां[1] पुरतः प्रपञ्चविटपिप्रोद्दामघोराटवी-
मूलोन्मूलनकर्तरीञ्च नगरीं पश्यान्धकध्वंसिनः ।
यां योगेन परेण यान्ति पदवीं कालेन संक्लेशिता-
स्तामेषा विदधाति जीवनभृतामन्त्यक्षणे[2] हेलया ॥७४

पश्यैतं[3] ध्वजमिन्दुमौलिनगरीलक्ष्मीकराम्भोरुहा-
कारं श्रीयुतविन्दुमाधवमहाप्रासादमूर्ध्नि[4] स्थितम् ।
अस्यालोकनमात्रतो जिगमिषोर्वाराणसीमुत्सुकैः
प्रेमानन्दपरम्पराहितमहामूर्छा च संवीक्ष्यताम् ॥७५॥

श्रूयन्ताञ्च परितो वाराणसीमभिधावतां महाकवीनामनेकविधानि सुभाषितानि श्रवणीयानि । इति तत्तदाकर्णनसमुत्सुककर्णतया समुत्तस्थौ ॥८३॥ ततश्च

भवोद्भूता सूते भवनिवहमेव प्रतिलवं[5]
भवैकान्तप्रेमास्पदमपि भवध्वंसनकरी ।
अपूर्वा कापीयं चरमपरमानन्दपदवी
कदा भूयात् काशी मम नयनवर्त्मातिथिरपि ॥७६॥

---

1. Ms. तीर्णांतां 2. Ms. ०स्त्य० 3. Ms. ०नं 4. Ms. ०ध्नि०
5. Ms. ०न०

अनिर्वाणं ज्योतिर्दधदपि च निर्वाणमनिशं
न कालप्रारम्भं दधदपि महाकालविभवम् ।
कदा काश्याख्यानं पुरमपि पुरारिप्रियतमं
चिदानन्दाकारं नयनपथवर्ति प्रभविता ॥७७॥

विधत्ते पाश्चात्त्यामतिरुचिरवेणीं लघयते
प्रभासप्रारम्भं[1] हसितविलसत्पुष्करमुखा ।
विलासिश्रीकण्ठा रुचिरमणिकर्णाभरणभृत्
प्रियेवान्या शम्भोर्मयि भवतु काशी सकरुणा ॥७८॥

उदञ्चद्वेदान्तध्वनिमधुपझङ्कारसुमनाः
परानन्दोद्रेकप्रणवनवसन्मञ्जरियुता ।
चतुर्वर्गाभिख्यप्रबलफलसञ्चारचतुरा
लतेव श्रीकाशी विघटयतु सन्तापमखिलम् ॥७९॥

त्रिलोकालोकाय स्फुरदुरुमहातारकतया
सदा नक्षत्रेशद्युतिदलितघोरान्धतमसा ।
[2]दधद्द्वन्द्वातीतस्फुरदुरुमहाचक्रसरसीं
निशेव श्रीकाशी कवलयतु सन्तापमखिलम् ॥८०॥

विराजन्त्यब्जेशद्युतिदलितदावानलरुचिः
स्फुरत्केदारश्रीज्व[3]लदतुलरत्ने[4]श्वरमही ।
व्रजद्दुःखद्वन्द्वस्फुरदुरुमहाचक्रसरसी
दिवे[5]व श्रीकाशी शमयतु तमः सर्वजगताम् ॥८१॥

अकुण्ठं वैकुण्ठं परिहसति चारुद्युतिमिषा-
दपूर्वं पूर्वाद्रि[] मलयमलयं यत् प्रतिदिनम् ।

---

1. Ms. ०म्प्रा० 2. Ms. It is hard to defend the use of दधत् here. A पाठ like दधत्यद्वन्द्वातिस्फुरदुरुमहाचक्रसरसीं is free from mistake 3. Ms. ०जं० 4. Ms. ०री० 5. Ms. दे०

तदेतत् काश्याख्यं नगरममितानन्दसदनं
कदाहं द्रक्ष्यामि[2] स्मरविजयिनः प्राणसदृशम् ॥ ८२॥

अनङ्गारि[3]प्रेयस्यपि जनसमूहं विदधती
सदानङ्गं तस्मै किमपि कमनीयं ददद[4]पि ।
पुरी काशी नेत्रभ्रमरनलिनी हन्त भविता
कदा भूयो दैव[5]द्विपदलितबुद्धेः क्षणमपि ॥८३॥

लसद्दिव्याकाराः स्फुरदुरुगुणग्रामनिलयाः
समीहन्ते यस्मा[6]दिह विरतिमुद्दा[7]ममतयः ।
गुणातीतं हीनाकृति किमपि गन्तुं पदमहो
न विद्मस्तत् काश्यां किमिह परमं वस्तु वसति ॥८४॥

जनुर्धारामित्रं मतिमिह विहातुं कृतधियां
समूह[ः] श्रीकाशीं श्रयति यदिमां कालभयतः ।
महाकालो यत्र प्रथयति महामृत्युपदवीं
पुनर्भूविश्रान्त्यै तदियमतिचित्रैकमहिमा ॥८५॥

कदाहं मध्याह्नद्युमणिकिरणोद्दीपितशिराः
प्लुतः स्वेदाम्भोभिः सरणि[8]सरणव्यग्रचरणः ।
कियद्दूरे काशी पथिकमनुजानस्त्य[9]नुपदं
वदन् भूयो भूयः श्रममपि विनेष्यामि निखिलम् ॥८६॥

श्रान्तः पान्थजनैर्दृगङ्गुलिपरिक्षेपैः पुरः प्रेक्षितां
काशी[ं] सौधकदम्बचुम्बितनभोलक्ष्मीमुखाम्भोरुहाम् ।
वीक्ष्योद्यत्पुलकालिपीवरतनुः प्रेमास्रधाराप्लुतो
भूयासं सहगामिनिर्भरपरीरम्भामृतैर्निर्वृतः ॥८७॥

---

2. Ms. दृ० 3. Ms. ०लङ्का० 4. Again an अपप्रयोग, सदानङ्गं तस्मै किमपि कमनीयञ्च ददती obviates the difficulty.
5. Ms. दे० 6. Ms ०स्या० 7. Ms. ०द्रा० 8. Ms. ०म० 9. Ms. ०स्य०

श्रीवाराणसि विश्वनाथनगरि श्रीनाथभक्तिप्रदे
श्रीकण्ठातिमनोविनोदजननि[1] श्रेयःश्रियां धारिणि ।
पञ्चक्रोशि करोषि पञ्चवदनं पञ्चत्वमात्राद्दहं
जल्पन्नेव कदा प्रणामनिवहैर्यास्यामि हास्यान्वितः[2] ॥८८॥

मदुद्भवदिनावधिप्रथितरोषमभ्युद्यतं[3]
प्रचण्डमपि पण्डय प्रवरदण्डमघान्तक ।
महादुरितसङ्ख[य]या त्वमपि चित्रगुप्तोत्कतां
पुरी नयनगोचरीभवति मेऽद्य वाराणसी ॥८९॥

इत्यादीनि प्रेमार्द्रहृदयः शुश्राव ॥८४॥

ततो विमानादवतीर्य–राजन्, द्विजराजशेखरराजधानीं वन्दस्वावगाहस्व च श्रीमणिकर्णिकोत्तरवाहिनीसम्भेदे ॥८५॥

धन्यैषोत्तरवाहिनी विजयते स्वर्वाहिनी यन्महा-
माहात्म्यं कथयन्ति दैत्यरिपवो मन्दाकिनीरोधसि ।
सैषा श्रीमणिकर्णिका सुरधुनी यत्सङ्गमाकाङ्क्षया
तेपे दुश्चरमुग्रमद्भुततपो मन्वन्तराणां शतम् ॥९१॥

इति देव्याज्ञया सहैव तया विहितवाराणसीकृत्यकलापो देव्या [सह] पूर्वमलङ्कृतं विमानमारुरोह ॥८६॥

[ ततः पुनरपि देवी प्राह स्म । ]

राजन् पश्य पुरः कलिन्दतनयास्वर्वाहिनीसङ्गजं
तीर्थं गुप्तसरस्वतीव्यतिकरं[4] त्रैलोक्यनिस्तारणम् ।
सम्प्राप्ते मकरं निदाघकिरणे ब्रह्मेशनारायणा
अत्रायान्त्यरुणोदये प्रतिदिनं स्नातुं समस्तामरैः ॥९२॥

इति । तत्रापि विमानादवतीर्य विहिततत्तीर्थकृत्यकलापः पुनरपि देव्या सह विमानमारुरोह ॥८८॥

---

1. Ms. ०नि: 2. Ms. ०निल: 3. Ms. ०भ्य० 4. Ms. ०स्त्रै०

ततश्च पुनरपि सुविस्मयप्रेमार्द्रहृदया सपुलकाङ्गमङ्गुल्या[1] दर्शयन्ती देवी प्राह[स्म] ॥८६॥

प्राहुस्तारकमद्वितीयमहिम ब्रह्मेति मन्त्रं विभो-
र्यस्येशोऽपि विधाय साधनचयं मन्वन्तरैर्भूरिभिः[2] ।
सिद्धिम्प्राप[3] परां तदेव वितरन् काश्यां मुमूर्षोः श्रुतौ
निर्वाणं विदधाति योगनिवहैर्दुष्प्रापमत्यद्भुतम् ॥६३॥

तस्यैषा नगरी विभाति सरयूतीरे जगत्पावनी
राजन्नुत्तरतो विलोकय विभोः श्रीतारकब्रह्मणः ।
श्रीमद्भास्करवंशभूषणमहाराजस्य दूर्वादल-
श्यामोद्दामकलेवरस्य करुणासिन्धो रघूणाम्पतेः ॥६४॥

राजा तु तदाकर्ण्य समुज्जृम्भमाणमहाकुतूहलतरलमानसः सप्रणामाञ्जलिस्तस्मिन् विमान एवोत्तिष्ठन्[4] विलोकयामास ॥६०॥

ततश्च महाजवतया विमानराजो नानाजनपदानतीत्य सुदूरमनुससार ॥६१॥

ततश्च व्रजभुवनतमालतरुस्तोमसमेधमानमहामहीरुहव्यूहघनगहनाकारदुर्वारमहान्धकारावहेलनकुपित इव लोहितायमाने हेलिनि, निजगुरुगुरुकोपोपशमनानुगमनाय कलिन्ददुहित्रेवाम्बरतलमभिधावितेषु निजतरङ्गनिकरेष्विव[5] तिमिरपटलेषु,निजानुग्राहकनाथन्दिननाथन्तथाविधमवस्थान्तरमासादयन्तमवलोक्य समुत्पन्ननिर्वेदखेदतया विहाय सहचरीः प्रव्रजत्स्विव चक्रवाकनिकरेषु, प्रोषितपतिकतया मुद्रितपद्ममुखास्विव पद्मिनीषु, समीरसञ्चारनिपतितकुसुमासारतया शाखाविवरनिकेतनविविधविहङ्गमसङ्कूजि[त]तया गलितबन्धननिबन्धननिपतत्परिणतफलजालतया च सायन्तनसपर्या-

1. Ms. ०मङ्गन्या 2. Ms. ०ति: 3. Ms. ०म 4. Ms. श्र०
5. Ms. ०षु in place of ०ष्विव

पर्यायम्पर्याचरत्स्विव द्रुमनिवहेषु, पशुपशिशुजालकाल्य[1]मानानां[2] गवां धवलिमधारया धवलीक्रियमाणधरामण्डलया[3] विडम्ब्यमानेष्विव सगरसन्तानसन्त्राणानुकम्पावर्धितरंहस्तरङ्गतरलेषु[4] भागीरथीस्रोतोनिकरेषु, पश्चिमाशाभिमुखमभिधावन्तीनाञ्च गवां हम्बारवैराहूयमान इव तत्खुरजनितरजःपुञ्जस्य पूर्वाशाभिमुखस्य सन्ध्यारागारुणितस्य व्याजेन तत्क्षणमुदयाचलशिखरप्रस्थाप्यमानकरनिकर इव दिवाकरे, हंसयानहरिहरिणाङ्क[5]तरणिविराजमानासु [तरणिदुहितुरप्सु] सुरनगरसभास्विव, कालिन्दीतीरभूमिष्ठकमलकाननमपहाय तटतरुकुसुमसञ्चयमभि[6] गोपालजालविरचितसायन्तनानलबहलधूमपटलविजिगीषयेव धावत्सु भ्रमरसमाजेषु, तदुभयविजयस्पर्धया वर्धमानास्विव घनगहनमहीमहाश्यामिकासु प्रलयविशेषप्लवमानैः कालिन्दीपयःपूरैरिव प्लावितेषु रोदसीविवरेषु, अतितरविजृम्भमाणकैरवकाननसुविमलपरिमलगरिमनगरी[सी]मलङ्घनाय विहायसमुत्पतितेष्विव रजनिगन्धाकुसुमगन्धसन्दोहेषु,दीप्यमानास्विव वनदेवताभवनदीपावलीषु स्वल्पाल्पसमुन्मीलदमलदलासु चम्पककुसुमराजिषु, चिरविरहज्वरजर्जरनिर्जरराजहरिदनिकोपकलितचरणप्रहरणलग्नलाक्षा[7]रसलेपलोहितायमाने च हरिणलाञ्छने, तारकानिकरव्यतिकरविराजमानगगनाङ्गनानुचिकीर्षयेव प्रकटितप्रोन्मीलदनेकविधविपुलकुसुमसमाजे,व्रजभुवनमण्डनायमानमहाकानने विमानादवतीर्य [देव्युवाच] "राजन्, सेयमशेषनिगमनि[ज]गर्वनिवहानिर्वचनीयमहामहिमसमूहमहनीयतया मही परममोक्षमुख्योपायनिकायसप्तकमूर्धन्यभूतमथुरा[मण्डल]मण्डनायमाना[8]पि परमपुण्यकेतनद्वादशारण्यवरेण्यवृन्दारण्यमयी ॥१२॥

---

1. Ms. ०न्य०   2. Ms. ०ला०   3. Ms. ०ध्वनिक्रियमाण०
4. Ms. ०णे०   5. Ms. ०ङ्क०   6. Ms. ०मिति
7. Ms. ०म०   8. Ms. ०नोऽ०

यत्र श्रीवृषभानु[भानु]तनयाप्रोद्दामलीलालसत्-[1][2][3]
कल्लोलैस्तरलीकृतो विहरति त्रैलोक्यचूडामणिः ।
निर्मज्जे[थ]व रसार्णवेषु[4] निभृतं नित्यं तपत्युच्चकै
राधावल्लभनाम तत्फलमपि प्राप्तः किमप्यर्थयन् ॥''६५॥

ततश्च श्रीवृन्दावनपरमशोभातिशयसमवलोकनजनितां गलिताञ्जनश्यामलितां त्रैलोक्यलक्ष्म्याः प्रेमास्रधारामिव, तत्तदवान्तरभुवनविहरणचतुरकिशोरशिरोमणिमयशरव्यसञ्चार्यमाणां श्रीमद्वृषभानुतनूजाकटाक्षपरम्परामिव, व्रजभुवनपरमपरिमलपटलानुसारनिपतितां मन्दाकिनीकमलकाननमन्दारवनचरभ्रमरधोरणीमिव, सुमधुरमुरलीनिनादश्रवणद्रवितनिपतितां महेन्द्रपुरमण्डलमहेन्द्रमणिमण्डलीमिव, अतितरचतुरमनोहरमुरहरवचनामृतनिर्झरधारा[5]निर्वाप्यमाणकिञ्चित्प्रणयापराधैधितप्रियतमाकोपदहनमहाधूमलेखामिव, निरन्तरविजृम्भमाणमहाविहाररसमयपरब्रह्मानन्दसन्दोहसाक्षात्करणविगलितनिखिलकरणान्तःकरणतया निःसहनिपतिततनूलतायाश्चतुर्दशभुवनाधिदेवतायाः स्खलितनिपतितां कवरीमिव, क्रीडाविनोदनाय महेन्द्रेण सम्प्रेषितां मन्दाकिनीमहानीलोत्पलगहनपरम्परामिव, श्रीराधावयवपरमसौन्दर्यलहरीपरमपरिचयातिशयसमुचितप्रेमविशेषद्रवितनन्दनकलेवरललामलावण्यधारामिव, श्रीराधामाधवचरणसरोजराजसभाजनाय पातालतलनिलयसपरिवारवैरोचनिकरनिकरसमुद्धूयमानां[6] मेचकचामरपरम्परामिव, विकचसरोजकैरवरक्तसन्ध्यकसौगन्धिकमुखकुसुमगन्धसन्दोहसञ्जनिताद्भुतसौरभसम्भारतया नागलोकलोकोपरचितां बहलकालागुरुधूमलेखामिव, निखिलभुवनवनदेवताभिरुपचरितां श्रीवृन्दावनवसुन्धरायाः प्रसाधनदिव्याञ्जनपुञ्जमञ्जुलसारङ्गमदमयमहापत्रलेखामिव,

1. Ms. ०न्द्यो० 2. Ms. ०णी० 3. Ms. विरहति 4. Ms. ०मा० 5. Ms. ०म्व० 6. Ms. ०हू०

[1] सुविकचकुसुमकोकनदह्लककल्हारसहस्रदलकमलततसमुदित-[2] विविधतारा[तारा]पतिमतुलाम्प्रणतिनिपतितां नभःस्थलीमिव, कविनिवहोपवर्ण्यमानमात्मनः[3] श्रीराधाकेशपाशकेशवकायसादृश्यमत्यन्तविसदृशमित्यपराधवाधितमात्मानं मन्यमानाम्प्रणतिनिपतितां महामेघमण्डलीमिव, प्रलम्बमानप्रलम्बदानवनिधनावसरसमेधमानमहाकलेवरस्य नीलाम्बरस्य स्खलितनिपतिताम्बरलक्ष्मीमिव, निराकृतपुष्करप्रभावामपि पुष्कराक्रान्तां, पावनसलिलामप्यशुचिजलां, प्रबलवाहिनीमपि भङ्गतरलाम्, आप्यायित[ा]श्वासितजगतीमपि कालरूपां, कृतान्तसोदरामपि[4] पातकभयध्वंसिनीं, चण्डांशुसम्भवामपि सुशीतलां, कृष्णामपि विशदां, दृश्यमानाधोभुवनामपि गम्भीरां, सत्त्वबहुलामपि[5] तमोमयीमिव दृश्यमानां, सगरसन्ततिपरमनिर्वृतिहेतुभूतामपि न भीष्मजननीम्, अत्रान्तरा सरसश्रान्तश्रीराधामाधवश्रम[नीर]शीकरनिकरव्यतिकरविवर्धमाननीरपूरां, निरन्तरनिर्भरनिपतद्गोवर्धनशैलेन्द्रनिर्झरनीरधारासारघनझात्काररवक्षुभितमीन-[6][7] मकरशिशुमारकुम्भीरचक्रान्दोलितगम्भीरनीरपूरां, तरलमहातरङ्गमालाचुम्बिताम्बरविवराम्, अतिगम्भीरजलां कालिन्दीन्ददर्श ॥६३

सम्भूता दिननायकाद्भगवतस्त्रैलोक्यचूडामणे
रासश्रान्त्यपनोदिनी मुररिपोः श्रीराधिकाया अपि ।
तत्तत्क्रीडनकुञ्जपुञ्जरुचिरश्रीतीरभूमण्डला
सेयं श्रीयमुना पुनाति जगतीं तीर्थौघचूडामणिः ॥६६॥

अपि च

पीतान्यञ्जलिभिः स्वयम्भगवता रामेण सञ्चारण-
श्रान्तेनेव[8] गवां पयांसि मधुराण्यत्यर्थशीतान्यपि ।
यस्याः सङ्गवशात् प्रयागमतनोत्तीर्थाधिराजं पुरा
देवानान्तटिनी विभाति यमुना सेयं जगत्पावनी ॥६७॥

---

1. Ms. सुकविकच० 2. Ms. ०न० 3. Ms. ०ना 4. Ms. ०न्ति०
5. Ms. ०त्व० 6. Ms. ०निपतितद्गु० 7. Ms. ०य० 8. Ms. ०नापि

स्वनीरकृतमज्जनप्रचुरगोपसीमन्तिनी-
तनूततितडिल्लताप्रचयचारुसञ्चारिणी ।
धरावलयलम्बिनी किमु नवीनकादम्बिनी
कलिन्दगिरिनन्दिनी पतितपावनी पातु नः ॥९८॥

प्रतीरतरुमूलभूनिलयराधिकामाधव-
स्फुरच्चरणल[ा]ञ्छनप्रचुरमाधुरीचुम्बिनी ।
व्रजक्षितिविहारिणी विविधतापसंहारिणी
कलिन्दगिरिनन्दिनी पतितपावनी पातु नः ॥९९॥

महेन्द्रमणिमण्डली[1]किरणधोरणी किं स्फुर-
न्महामरकतस्थली[2] किमथ नीलपद्माटवी ।
नवाञ्जनमहीधरद्रवविडम्बिनी सर्वदा
कलिन्दगिरिनन्दिनी पतितपावनी पातु नः ॥१००॥

[3]वृषारिवृषभानुजाचरणचारिचन्द्रावली-
मयूखपरिरम्भिणी व्रजसुधारसास्वादिनी ।
स्मरद्रुमविनाशिनी रसपयोधिसंवर्धिनी
कलिन्दगिरिनन्दिनी पति[त]पावनी पातु नः ॥१०१॥

महाविषयवासनाविषमनागपाशावली-
कठोरतरबन्धनव्यथितजीव[4]निस्तारिणी ।
तरङ्गतरली[5]कृताम्बुजवनी मनोहारिणी
कलिन्दगिरिनन्दिनी पतितपावनी पातु नः ॥१०२॥

इति तुष्टाव च । ततो विमानादवतीर्य स्वयमवगाह्य राजानमप्याज्ञापयामास । राजा तु यथाज्ञापयति भगवतीति सप्रणामादरमवतीर्य वगाह्य विहितसायन्तनकृत्यकलापः कमपि परमानन्दमभि-

1. Ms. ०नी०  2. Ms. ०लीं  3. Ms. वि०  4. Ms. ०वि०
5. Ms. ०णी०

नवमनुबभूव। पुनरपि तथैव स्वान्तप्रसादभूमौ दृष्टचरं सुकुमारं कुमारं रथमारूढं बहुभिर्बाधितपूर्वं सम्प्रति विगलितजरतीगृहीत-पाशद्वयमवशिष्टतदालम्बितशीर्णप्रायैकसितपाशं[1] रथस्थमव्यस्पृष्ट-रथमिव समुन्मज्जन्तं ददर्श ॥६४॥

[2]क्षणेन च तत्सर्वं तिरोबभूव। राजा तु जिज्ञासुरपि[3] तद्विशेष-वृत्तान्तं सहसा तत्सर्वमेव विसस्मार। ततश्च दूरत एव केनचिद्-धीयमानां कामपि स्तुतिगाथां शुश्राव ॥६५॥

यथा।

सान्द्रानन्दभरातिमन्थरतरैरिन्द्रादिवृन्दारकै-
रम्भोजासनशङ्करप्रभृतिभिर्यश्चिन्त्यते सन्ततम्।
जीयाद्विश्वशरण्यचारुचरणद्वन्द्वारविन्दद्वयो
वृन्दारण्यवरेण्यसागरविधुर्गोविन्ददेवप्रभुः ॥१०३॥

तालीतालतमालजालरुचिरे शालप्रजालङ्कृते
[4]गुञ्जन्मञ्ज्वलिपुञ्जकुञ्जभवने वृन्दावने सम्प्रति।
यः संसारयते पुराणचरितं स्वीयं पुराणोदितं
भक्तानां जयति त्रिलोकतिलको गोविन्ददेवप्रभुः ॥१०४॥

यद्वेदान्तनितान्तसूक्ष्मविलसत्सिद्धान्तसन्तानकै-
[5]र्मृग्येतापि यमीन्द्रमानसचयै रात्रिन्दिवं यत्नतः।
तद्रूपं किमपीह लोचनपथं दीर्घानुकम्पावशा-
न्निन्ये स्थूलदृशामसौ विजयते गोविन्ददेवप्रभुः ॥१०५॥

यः श्रीमद्वृषभानुजान्तरचरः प्रेमाम्बुधेश्चन्द्रमा
नित्यं [यः] किल भानुजातटमहारत्नावतंसाकृतिः।

---

1. Ms. ष्टं 2. Ms. has one redundant न after क्षणेन
3. Ms. ०वि० 4. Ms. गुञ्जन्मनिञ्जनिपुञ्ज० 5. Ms. reads मृग्यै०

यश्चन्द्रावलिसान्द्रसन्ततमहामानान्धकारोत्कर-
ध्वंसी भानुरसौ[1] व्रजे विजयते गोविन्ददेवप्रभुः ॥१०६॥

राजा तु सादरं प्रेमस्तिमितमाकर्ण्य सगद्गदं भगवन्तं गोविन्ददेवं प्रणनाम । इदमचि[न्त]यच्च ॥६६॥

अहो !

मान्योऽगण्यसुपुण्यजन्यमहिमा[2] धन्यो वरेण्यः सतां
यः स्वान्तेऽपि सकृत् करोति सुकृती यस्यार्चनं भक्तितः ।
कालिन्दीसलिलावगाहनवशात् पूतात्मनां तत्पद-
द्वन्द्वाराधनवत्[3] परं[4] सुकृतिनां किं वाऽपरं[5] ब्रूमहे ॥१०७॥

अहो वृन्दारण्यप्रभवनवकुन्दादिकुसुमै-
रमन्दैर्वासन्तीवकुलकुमुदेन्दीवरचयै[ः] ।
समाराध्य श्रीमद्व्रजभुवनरत्नाकरविधुं
कृतार्थानां ब्रूम[ः] कमिह महिमानं कृतधियाम् ॥१०८॥

ततो निखिलदेवर्षिब्रह्मर्षिभिर्दैवत[6]दानवादिभिः[7] प्रभा[स]पुष्कर-मुखैश्च[8] मूर्तिमद्भिर्दशकोटिभिरन्तरीक्षक्षौणिस्वर्लोकनिकेतनैर्महातीर्थैर्विरचिताञ्जलिभिः सप्रणामैर्दूरत[9] एव संस्तूयमानमतिमहनीयमहामहिममहःपुञ्जमयमिव निखिलपावनपदार्थसार्थसारमयमिव पुण्यद्रुमनिर्यास[10]मयमिव पीयूषपाथोनिधिमन्थनजनितनवनीतरस[11]मयमिव श्रीराधामाधवप्रेमरसमाधुरीपूरपूरितमिव भूषितभूखण्डं श्रीराधाकुण्डं श्रीश्यामकुण्डञ्च ददर्श ॥६६॥

1. Ms. भानुभानुरसौ 2. Ms. मान्यगण्य० 3. Ms.०त० 4. Ms. ०रां
5. Ms. ०वा परं० 6. Ms. ०र्म० 7. Ms. ०वान्द्रिः० 8. Ms. ०खे०
9. Ms. ०भि० 10.Ms. ०म० 11. Ms. ०सं०

ततो देव्याज्ञया तयैव सह प्रथमं श्रीराधाकुण्डे तदनु श्यामकुण्डे च ममज्ज ॥९७॥

तत्र च तमेव कुमारमुन्मज्जन्तं गलिताखिलबन्धनं ताञ्च वर्षीयसीं तान्यपि रात्रिञ्चरमिथुनानि सर्वमेव भस्मीभूतं तानपि षट्पुरुषानस्य[1] दासीभूतान् निजमपि तुरङ्गमं तस्मिन् देव्या विमाने[2] विलीयमानन्ददर्श ॥९८॥

ततो विस्मयविस्फारितलोचनो न किमपि ददर्श केवलं भगवतीं तञ्च विमानराजं ददर्श ॥९९॥

ततश्च विस्मयानन्दभरमन्थरहृदयो विहिताञ्जलिसप्रणामं भगवतीं पप्रच्छ ॥१००॥

"भगवति, कोऽयमतिसुकुमारः कुमारो रथमारूढोऽतिमहत्या जरत्या सितासितलोहितैर्वज्र[3]निष्ठुरैस्त्रिभिरतिदीर्घरज्जुभिः[4] संयमितग्रीवो दारुणेन च रात्रिञ्चरमिथुनषट्केनाग्रेसरीकृतवञ्चकपुरुषपञ्चकेनातिचञ्चलेनैकेन च सकलाज्ञापकेन सर्वाग्रे सञ्चारिणा बहुधा विप्रलोभ्य सम्पीड्यमानः शुद्धस्वभावभूमौ[5] दृष्टपूर्व[ो] विगलितप्रायासितलोहितरज्जुद्वयो रथान्तराले चास्पृष्टरथं किमपि कमनीयं कमलकाननं तेनाप्यनुपलभ्यमानं तदानीञ्च गन्धर्वनगराकारतया मदीयतद्गतसंस्कारेण सहैव तिरोबभूव। तञ्च पुनरपि कालिन्दीसलिलावगाहनानेहसि समुन्मज्जन्तं विशीर्णप्रायजरतीगृहीतसितैकपाशं विगलितासितलोहितपाशद्वयं रथारूढमप्यस्पृष्टरथमिव देदीप्यमानं दृष्टवानस्मि। त[त्] तर्हि तर्हि च समये जिज्ञासोस्तद्गतसंस्कारमादायैव तिरोबभूव। तञ्च पुनरप्यत्र

1. Ms. ०नूऽस्य  2. Ms. विद्यमाने  3. Ms.०ज०  4. रज्जु is feminine, but त्रिभिः and वज्रनिष्ठुरैः are masculine; दामभिः may do.  5. Ms ०लो

कुण्डद्वये विहितावगाहनं विगलिताखिलबन्धनं ताञ्च जरतीं तान्यपि मिथुनानि भस्मीभूतं सर्वमपरांश्च कठोरपुरुषान् विनयावनता[न]स्य दासीभूतान् पश्यतो[1] मम स तुरङ्गमो दृश्यमान एव भगवत्या विमानराजे विलीनः तच्च कुमारादि[क]मखिलमेव तिरोभूतम्। तदनुगृह्यात्वाज्ञापयतु भगवती कोऽयमतिसुकुमार[:] कुमार[:], का वा सा जरती, के च ते सितासितलोहिताः पाशाः, कानि वा तानि कर्बुरमिथुनानि, के च ते वञ्चक[ा]ः पञ्चपुरुषाः, कश्च तेषामग्रेसरोऽतिचञ्चलः पुरुषः, किं निमित्तश्चानेकैरेक एवासहायो बहुबाध्यमान आसीत् सः[2] कुमारः, कश्चास्य रथो निरश्वो निःसारथिरनेकवातायनो बहुद्वार[:], किञ्च[3] तत्तेजोमयमाश्चर्यभूतमम्भोजकाननम्, कथञ्च मुक्तबन्धनः सः, कथमेतेऽपि भस्मतामपरे च दासतामायाताः, कथं वा मदीयस्तुरङ्गमो भगवत्या रथ एव दृश्यमानो विलीनः, स चापि कः, स च कुमारः कथ[मन्त]र्हितः, क्व वा वसतीदानीम्। यदि दासजनपरम्परापरिगण्[4]नीयतयानुकम्पनीयोऽयं तदाज्ञापयतु सविशेषवृत्तविवरणेन" इति पादयोः पपात ॥१०९॥

ततश्च प्रेमस्तिमितहृदया देवी प्रणतमवनीपतिमुत्थाप्य निर्भरमालिङ्ग्य प्रत्युवाच ॥१०२॥

याां मायां समुदीरयन्ति कृतिनो[5]ऽनाद्यामविद्यां तथा
सेयं घोरतराकृतिः सुमहती वर्षीयसी वीक्षिता।
कामाद्याः षडमी रतिप्रभृतिभिः पञ्चापि बुद्धीन्द्रिया-
ण्येषामग्रसरं मनोऽतिचपलं क्ष्मापालचूडामणे ॥१०६॥

प्राहुः सत्त्वरजस्तमांस्यपि गुणांस्त्रीन् दारुणान् दुस्त्यजान्
पाशान् विद्ध[-थ]तनूनथो[6] तनुमिमां जानीहि चित्रं रथम्।
तत्रानेकतनूजकूपकुहरैर्वातायनैरिन्द्रिय-
द्वारद्वारचयो विभाति नृपते पादौ रथाङ्गद्वयम् ॥११०॥

---

1. Ms. ०त्  2. Ms. सु०  3. Ms. ०श्चि०  4. Ms. ०म०
5. Ms. ०नो नाद्या०  6. Ms. ०मथा०

बद्धन्तत्र विचेष्टमानमनिशं निष्कारणद्रोहिभि-
र्दुर्वारैरपि[1] पीड्यमानमवशं तैरेव रात्रिन्दिवम् ।
स्वात्मानं समवेहि[2] पङ्कजवनीं तत्रापि तेजोमयीं
षट्चक्राणि सुपक्वसाधनमहायोगीन्द्रगम्यान्यपि ॥१११॥

चेतस्ते नृपते तुरङ्गमवरस्तेनासि[3] सम्प्रापितः
सारङ्गेण च केनचिन्नरपते सत्सङ्गसंज्ञं सरः ।
तत्र च्छिन्नरजस्तमाः[4] प्रकलयन् सत्त्वैकपाशं पुनः
कालिन्दीसलिलावगाहगलितप्रायं स्वयं दृष्टवान्[5] ॥११२॥

श्रीराधाश्यामकुण्डान्तिकभवनसमासङ्गतस्तच्च पाशं
छिन्नं चेतस्तुरङ्गं मिलितमपि महासाधनाख्ये रथेऽस्मिन् ।
आलोक्याऽवेहि[6] सद्यो दलितकलिमलन्तीर्णसंसारसिन्धुं
जीवन्मुक्तं कृतार्थं स्वमपि नरपते नास्त्यतः प्रार्थनीयम् ॥११३॥

भस्मीभूतमनोजमत्सरमदक्रोधादिदोषोत्करो[7]
मुक्ताशेषदुरन्तबन्धनचयः स्वाज्ञाविधेयेन्द्रियः ।
जीवन्मुक्तिमुपागतोऽसि[8] नृपते नातः परं कर्मणां
सामर्थ्यं त्वयि किञ्चिदङ्कुरलवप्रोद्भेदनेऽपि[9] ध्रुवम् ॥११४॥

वृन्दारण्यरहस्यमेवमपरं[10] लीलाविलासाद्भुतं
प्रत्यक्षीकुरु तुभ्यमक्षियुगलं दिव्यं ददाम्यद्भुतम् ।
नैतत् स्थूलदृशां [नृणाञ्च नयना]तिथ्यं कदापि व्रजे-
दित्याभाष्य तदा ददौ नृपतये देवी सुदीप्तेक्षणे ॥११५॥

आकीर्णं सुमनोमनोहरमहासन्तानसन्तानकैः
श्रीवृन्दावनरासमण्डलमहीहारायमाणं पुरः ।

---

1. Ms. ०दु० 2. Ms. ०वै० 3. Ms. ०स्तु० 4. Ms. छि० 5. Ms. दृष्ट० 6. Ms. ०वै० 7. Ms. ०षा० 8. Ms. ०न्मुक्तिमुक्तिमुपागतोऽसि 9. Ms. ०न० 10. Ms. ०मद्य०

रम्यन्तत्र ददर्श काननमतीवाश्चर्यरूपन्ततः
कूजत्कोकिलकेकिषट्पदकुलं दमापालचूडामणिः ॥११६॥

ततश्च पारिजातचन्दनहरिचन्दनसन्तानमन्दारकल्पद्रुमाणां रसालशालचम्पकाशोककदम्बकाञ्चनपुन्नाग[नाग]केशरकुरुवकवकुलवककिंशुकजम्बूजम्बीरवरुणकरुणपीतशालार्जुनाञ्जनतिलककेतककेतकीनामेकैकमयवलयविभ्रमाणि विततानि महाकाननानि देव्या सह समालोक्यालोक्य सुदूरमनु[स]सार ॥१०३॥

तदनु काञ्चन काञ्चनशाखिना-[1]
न्ततिमतीवमनोहरपल्लवाम् ।
घनकलापकलापसमुज्ज्वलां[2]
परभृतै[रभृतै]रभिघोषिताम् ॥[3] ११७॥

नवकदम्बकदम्बविराजितैः
सुमुकुलैर्वकुलैर्विरवाकुलैः[4] ।
विपुलशालविशालमहीरुहां
घनवनीं नवनीरदसन्निभाम् ॥११८॥

विततमालतमालतमोमयीं
द्रुमनिशामनिशास्तमितप्रभाम्[5] ।
विषमसायकसायकभीषिता
विविशुरुत्कदृशां सुदृशां[6] गणाः ॥११६॥

अपि वतंसयति स्म विसारयन्
रुचिरमंशुकमंशुकविस्तरम् ।
नवघनाघनकाशनकेशवं[7]
हिमकरो मकरोज्ज्वलकुण्डलम्[8] ॥१२०॥

---

1. Ms. ०श्मि०   2. Ms. ०ज्व०   3. Ms. ०ष०   4. Ms. स्व०
5. Ms. ०न्त०   6. Ms. स०   7. Ms. ०न०   8. Ms. ०ज्व०

[1]समधुनी-तमधुनीतटभूरुहां
सुमनसां निवहानिव ह्रापयन् ।
मधुपसङ्गमसङ्गतमुग्धकैः
सुनिगमो निगमोपममारुतः ॥१२१॥
अनिलचञ्चलशाखिदलान्तरै-
र्विगलितो बहुधा हिमदीधितेः ।
अनुकरोति [2]करोऽतिसमुच्छ्रयं
किमु रुचामुरुचामरजन्मनाम् ॥१२२॥
स्फुटसरोजसरोजलशीकर-
व्यतिकरस्तिमितो वनमारुतः ।
व्यतनुतातनुतापितचेतसां
व्यजनतां जनताम्परिमुच्य ताम् ॥१२३॥
सहरिचन्दनचन्दनकाननं
स्फुरदनल्प[सकल्प]महीरुहाम् ।
विजितकेशरकेशरसौरभं
वनमलोकत लोकतमो[3]ऽपहम् ॥१२४॥
घनवनीनवनीलमहामणि-
प्रचुरसौधमहानगरान्तिके ।
तुहिनदीधितिदीधितिसञ्चयः
स्फुटमराजत राजतभित्तिवत् ॥१२५॥

ततो मणिमयीं मही[म]तिमहीयसीं सर्वतो-
विसारिनवहाटकप्रवरवप्रसुप्रावृताम् ।
कदम्बतरुभिस्तथा वकुलभूरुहैर्भूषितां
महारजतविद्रुमस्फटिकसौधज[ा]लोज्[4]ज्वलाम् ॥१२६॥

---

1. A. metrical irregularity, there being thirteen letters in this line instead of twelve. तमधुनीमधुनीतटभूरुहां may do. 2. Ms. करोति॰ 3. Ms. ॰पो॰ 4. Ms. ज्व

क्वचिन्नवनवोदि[त]द्युमणिविम्बकोटीशत-[1]
प्रभाः क्वचन रोहिणीरमणविम्बपुञ्जोपमाः ।
क्वचित् प्रवलदुर्दिनाद्भुतकुहूनिशीथद्विषः
क्वचित् प्रचुरचञ्चलाचटुलकान्तिकान्तार्चिषः ॥१२७॥

ददर्श नृपसत्तमस्तदनु चारुसौधावली-
र्द्विजैः श्रुतिमनोहरोच्चरणचारुभिः पूरिता[ः] ।
ततो भरितरोदसीविवरमध्यभागम्पुरो
निराकृतदिनत्विषं कमपि तेजसां सञ्चयम् ॥१२८॥

एकन्तप्तसुचारुकाञ्चनमहासौदामिनीसञ्चय-
च्छायञ्चापरमिन्द्रनीलजलदप्रायन्तदेतत् पुरः ।
तेजोद्वन्द्वमतीव राजतितरां दूरीकृतान्योदयं
शङ्के चाव्ययमद्वितीयममलं ब्रह्मेदमेव ध्रुवम् ॥१२९॥

इत्यानन्दपरम्परामनुभवन् प्रेमास्रधारामहा-
रोमाञ्चाञ्चितकाययष्टि विपुलं संवीक्ष्य दिव्येक्षणः ।
कोटीन्दुद्युमणिद्युतीन् सुनिभृतान् सत्कल्पवल्लीमयान्[2]
कुञ्जानम्बरचुम्बिनो[3] मणिमयप्रोद्दामवेदीभुवः ॥१३०॥

तेषामेकतमत्र मेरुशिखराकारं सुरत्नमारुहं
व्योमव्यापिनमत्र मण्डनचयानूर्ध्वोर्ध्वतः[4] संस्थितान् ।
एकैकत्र सविद्युदम्बुदमयीं[5] मालां मनोहारिणीं
गौरश्यामलकोमल[6][मल]महाकान्तीः समातन्वतीम् ॥१३१॥

तमालतरुमण्डली तरुणहेमवल्लीचयैः
किमिन्द्रमणिमण्डली नवहरिन्मणिश्रेणिभिः ।
नवीनघनमण्डली किमु तडिल्लतासञ्चयै-
रितिप्रचुरशङ्कया तरलितं मनो भूपतेः ॥१३२॥

1. Ms. ०म० 2. Ms. ०ह्वा० 3. Ms. ०ञ्च० 4. Ms. ०ह्व०
5. Ms. ०रि० 6. Ms. ०श्या०

तत्रोद्दामकिरीटमण्डनमहारत्नद्वयीमद्वयीं[1]
गौरश्याममयूखपुञ्जखचितब्रह्माण्डभाण्डोदरीम् ।
एकीभूततनुं मिथो भुजलतासंयम्यमानोभय-
ग्रीवां रिङ्गदपाङ्गभङ्गिविशिखैः प्रोच्चैर्मिथो निघ्नतीम् ॥१३३॥

दीप्तां काञ्चन काञ्चनव्रततिकां तत्रापि पूर्णं विधो-
र्विम्बं[2] चारुफलं नवाम्बुदघटाकीर्णं लसद्विद्रुमम् ।
चञ्चच्चञ्चलखञ्जरीटयुगलं तत्रोल्लसत्ताण्डवं
भूपालः समलोकयत् किमिति च प्रोच्चैर्वितर्काकुलः ॥१३४॥

च्युतमिवाङ्कगतं शरणागतं
हरिणशावमसौ व्रजकानने ।
अनुसृतोऽद्य विहाय विहायसं
जयति पूर्णसुधाकरमण्डलः ॥१३५॥

किमथ मध्यमवेत्य मृगाधिपं
समभिशङ्क्य तदङ्ककुरङ्गकः ।
इह ममज्ज सुधाकरमण्डले
स्फुटविशालविलोलविलोचनः ॥१३६॥

विहरणं बहुधा वहिरत्र किं
व्यतनुतामवहिश्च समीहितुम् ।
श्रुतिपथं निभृतं समुपाश्रितौ
विचरतो वरलोचनखञ्जनौ ॥१३७॥

अधृतमौर्वितयेव मुरद्विषः[3]
परिभवातिविजृम्भि[त]गौरवम् ।
विजयते किमपीह मिषाद्भ्रुवो[4]
धनुरनन्यजनेर्मणितोरणम् ॥१३८॥

---

1. Ms. ०स्यो०  2. Ms. वि०  3. Ms. सु०  4. Ms. ०द्रु

श्रुतिमनोहरनिस्वनहेतुभि[:]
सुनिभृतैर्यदसौ समुपास्यते।
द्विजगणैः सततं द्विजराजता
विजयते तदमुष्य सुनिश्चितम् ॥१३९॥

रससुधाम्बुनिधौ वदनाम्बुजे
स्मितमहोर्मिचयैस्तरलात्मनाम्।
मकरकुण्डलिनामतिमज्जनं
किमतिचित्रमचिन्तयदित्यपि ॥१४०॥

स्मरविजित्वर[1]मोहनमोहिनी-
तनुभृतोऽपि मनोऽतिविमोहनम्।
किमपि रूपमिदं वृषभानुतः
समुदितं न गिराम्पथि वर्तते ॥१४१॥

हरिनखाङ्कुरदारणनिःसृत-
प्रचुरमौक्तिकवारणकुम्भकम्।
इव सुमेरुतटं[2] तदुरुश्रम-
प्रभवविन्दुसुचारुपयोधरम् ॥१४२॥

मञ्जीराङ्गदहारकङ्कणमहाकेयूरकाञ्चीझनत्-
कारस्फूर्जथुगर्जितं[3] श्रमपयःसञ्जातसम्पातनम्।
व्यामर्द[4]त्रुटितोरुहारलतिकाविस्रंसिमुक्ताफल-
व्याजोद्यत्करकातिवर्षमभवच्चित्रं महादुर्दिनम् ॥१४३॥

श्रीराधाश्रवणावतंसनलिनघ्राण[5]च्छलादाननं
तस्याश्चारुकपोलमूलसरणिं सञ्चारयत्यच्युते।
शङ्के वारयितुं रुषा परुष[य]ा सुप्तोत्थिता प्रोच्चकै-
स्तीक्ष्णा द्वारचमूस्तनूरुहततिव्याजा सम[ ] भ्राजते ॥१४४॥

1. Ms. ०वे० 2. Ms. ०ड्र० 3. Ms. ०म्पा० 4. Ms. ०र्द्ध० 5. Ms. ०छ०

वीक्ष्यान्योन्यहृदन्तरे निजनिजच्छाये[1] पराशङ्कया-
न्योन्यं व्याक्षिपतोः किमुत्थितमिथःकायप्रवेशेच्छयोः ।
अत्यर्थं परिरम्भदम्भसमरारम्भाय संवल्गतोः
श्रीराधामुर[2]वैरिणोः स्मितसुधासारः सु[3]खायास्तु वः ॥१४५॥

यां मूलप्रकृतिं वदन्ति निगमाः सर्वेश्वराधीश्वरी-
माद्यां शक्तिमुदीरयन्ति परमां विद्यां तथैवागमाः ।
साराणामपि सारतामुपगता सूक्ष्मातिसूक्ष्माम्बिका
सेयं नन्दकिशोरजीवितमयी श्रीराधिका क्रीडति ॥१४६॥

लीलान्दोलनलोलमौलिविगलद्वेणीभरव्याजतः
किम्भाति [प्रति]विम्बिता हरितनोरालिङ्गिताया द्युतिः ।
किं वा श्रान्त्यपनोदनाय यमुना व्रीडावती पृष्ठतः
प्रेम्णाप्याययितुं समागतवती श्रीराधिकायाः स्वयम् ॥१४७॥

किञ्च

समक्षं राधायाः पिबसि हरिवक्त्राम्बुजसुधां
सगर्वं राधेति स्फुटमभिदधाना मृदुमृदु ।
प्रियात्यर्थं तस्या अपि मुरलि यस्मादसि सखि
त्वमेवैका धन्या विहितबहुपुण्या त्रिजगति ॥१४८॥

अपि च

तव क्वाणे प्रोन्मीलति मुरलि निस्पन्दमखिलं
जगद्ध्यानारूढं स्थगितचकिताश्वो रविरपि ।
रवेः पुत्रीस्रोतो वहति विपरीतं पुनरसौ
द्रवद्ग्रावग्रामः परिणमति गोवर्धनगिरिः ॥१४९॥

इत्यादीनि च तत्र शुश्राव । ततश्च महीपतिः क्रमशोऽवलोकया-
मास वि[4]हरमाणौ राधामाधवौ यथा—॥१०४॥

1. Ms. ०छा० 2. Ms. ०म्व० 3. Ms.०स्त० 4. Ms विहधारयमाणौ

क्वचित् सहजसुन्दरे नवनिकुञ्जसौधोदरे
विकाशिसुमनोमनोहरविचित्रतल्पान्तरे ।
मिथोऽतिपरिरम्भणामृतरसाब्धिमग्नान्तरौ
निमीलितविलोचनौ परमयोगभाजाविव ॥१५०॥

क्व चापि ललितादिभिः सहचरीगणैरावृतौ
मृदङ्गमुरजानकध्वनिभिरुल्लसत्ताण्डवौ[1] ।
परस्परकराङ्गुलिग्रथितपाणिपङ्केरुहौ
स्फुरन्मृदुमृदुस्मितौ मधुरहारिगीतामृतौ ॥१५१॥

क्वचित् पणितसस्पृहस्मितसुधारसप्रोल्लसत्-
सुचुम्बपरिरम्भणप्रमुखभूरिकेलीरसौ ।
सखीसदसि सस्पृहौ जयपराजयाभ्यामुभौ[2]
करोल्लसितपाशकौ निपुणमानसं दीव्यतः ॥१५२॥

क्वचित् प्रणयकोपितप्रियतमापदाम्भोरुह-
प्रपन्नमुरवैरिणो हितविधौ विशाखादिभिः ।
[3]कृतस्तुतिसभाजनप्रणतिरीषदीषत्स्मितं
तनोति वृषभानु[जा] नयनकोणलीलालवम् ॥१५३॥

क्वचिद्विषमसायकप्रचुरसङ्गराडम्बर-
श्रमातिविनिमीलितेक्षणसुनिःसहाङ्गीं प्रियाम् ।
विलोक्य तनुते स्वयञ्चरणचारुसंवाहनं
सुवीजयति चामरैरपि महापराधोपमः[4] ॥१५४॥

क्व चापि यमुनातटीनिभृतकुञ्जमध्यस्थले
तदीयलहरीचयप्रचुरशीकरैः शीतले ।
मिथः कथयतोः कथाः सपरिरम्भयो[:] शृण्वतो-[5]
रनादरवशादिव द्रुतमियाय दीर्घा निशा ॥१५५॥

---

1. Ms. ०रु० 2. Ms. ०भ्यां वभौ 3. Ms. कु० 4. Ms. ०स्वो० 5. Ms. ०ज्ञ०

वेणीपूततनुश्च पुष्करमुखासङ्गीकृतद्वारको
दुष्पारश्च गभीरमेष गतवान् मायापुरं मानसम् ।
काञ्चीस्पर्शनयोग्यतापि किमहो[1] नात्रास्ति चन्द्रानने
व्यक्तं ब्रूहि विशत्वसौ वणिगृणीत्याह [स्म] कृष्णः क्वचित् ॥१५६

क्वचिन्निकुञ्जमन्दिरे प्रसूनतल्पविस्तरे
महामणीन्द्रचत्वरे महेन्द्रसौधजित्वरे ।
मिथो विमर्दनस्खलत्प्रसाधना[2]दिराधन[3]-
प्रवर्तमानमानसं सहासमाह माधवम् ॥१५७॥

क्व भूषणानि सन्ति मे क्व च[4] द्वितीयमम्बरं
क्व केशपाशबन्धनं क्व वा कपोलचन्दनम् ।
त्वया हृतानि[5] तानि मे दुरन्तचौरचातुरीं
विहाय देहि सत्वरं विधेहि वेह सत्वरम् ॥१५८॥

सुविश्रुता हि ते पदोस्तुलादिकोटिशून्यता[6]
विहारहारिभूषणौ स्तनौ तवापि सुन्दरि ।
अनङ्गदौ[7] च ते करौ समस्तलोकविश्रुतौ
पुरो द्वितीयमम्बरं समस्तलोकविस्तरम् ॥१५९॥

इदञ्जगाद सादरं तथा तदङ्गसङ्गतं
चकार चारुभूषणव्रजं व्रजेन्द्रनन्दनः ।
क्वचिन्निमेषवर्जितप्रसारिताम्बुजेक्षणौ
परस्पराङ्गमाधुरीं निरीक्ष्य[8] ताश्च विस्मितौ[9] ॥१६०॥

क्वचिच्च पुरुषायितां प्रियतमां वहन् वक्षसा
स्वयञ्च ललनाकृतिर्भवति वेपमानाकृतिः ।
न चालयति[10] भीतवत् सशपथं निरस्यन्नमू-
मचुम्बयदिवाकुलो[11] निजमुखान्मुखं सुभ्रुवः ॥१६१॥

---

1. Ms. ०मि०  2. Ms. ०धा०  3. Ms. ०वा०  4. Ms. ०चि०
5. Ms. कृ०  6. Ms.०श्रणु०  7. Ms. ०त्य  8. Ms. ०वेक्ष
9. Ms. ०स्मृ०  10. Ms. ०नप०  11. Ms. ०ममूम्वच०

क्वचित् फणिवधूगणैर्निजफणामणीन्द्रोत्करैः
सतारककलानिधिद्युमणिवीतिहोत्रादिभिः ।
सभाजनपरायणैर्विहितचारुनीराजनौ
रराजतुरुदञ्चितस्मितमनोहरश्रीमुखौ ॥१६२॥

मयूरचमरीचयैर्मधुरवेणुनादाहतैः
प्रसारिततरैर्मनोहरकलापसच्चामरैः ।
समेत्य परितः स्थितैः समभिवीज्यमानौ मुदा
ददर्श मनुजेश्वरः क्वचन मञ्जुकुञ्जोदरे ॥१६३॥

क्वचित्त्रिदशनायकोपवनदेवताभिः समं
समस्तवनदैवतैर्विविधपुष्पहारादिभिः ।
विभूषितकलेवरौ मलयभूधराधीश्वरी-
विनिर्मितविलेपनोत्तमविचित्रचित्रोज्ज्वलौ ॥१६४॥

परस्परजिगीषयोच्चरितचारुगीतध्वनि-
प्रच[ा]यकृतमूर्छितत्रिभुवनैर्मृगाक्षीगणैः ।
सुचित्रमयकृत्रिमैरिव समन्ततः संवृतौ
क्वचिद्भुवनमोहनप्रचुरभङ्गिभिर्भूषितौ ॥१६५॥

सुरसद्मजिति स्फुटपद्मनिभे
घनवञ्जुल[मञ्जुल]कुञ्जगृहे ।
वृषभानुसुताव्रजराजसुतौ
विधिशङ्करनिर्जरराजनुतौ ॥१६६॥

निगमागमवाङ्मयसारमयौ
भुवनाद्भुतमोहनभावचयौ ।
स्मितभाषितभूषितचारुमुखौ
वररास[1]रसा[2]द्भुतभूरिसुखौ ॥१६७॥

---

1. Ms. ०वा० 2. Ms. ०व०

श्रीराधामुखविम्बमम्बरमहाधारे[1] [स]नीरोदरे
यद्भाति प्रतिविम्बितं हिमकरं तन्मन्वते[2] मानवाः ।
तत्र स्वेदभरद्रुताञ्जनचयच्छाया[3]: कलङ्कायिता-
स्तत्त्रुट्यन्मणिहारमौक्तिकचयच्छाया[4] भुवन्तारकाः ॥१६८॥

मल्लीमालतिकारसालवकुलश्रीखण्डभूमीरुहां
वृन्दारण्यभुवां प्रसूनपटलीसौरभ्यसंमिश्रितम् ।
कालिन्दीकुमुदाटवीपरिमलं किम्भूरिभारं वहन्[5]-
श्रान्तो मन्दमुपैति कुञ्जभवनं संमार्जयन्[6] मारुतः ॥१६९॥

एतस्मिन् समये महारसमये मञ्जीरहाराङ्गद-
श्रेणीकङ्क[ण]काञ्चिकाघनझनत्कारे समुन्मीलति ।
निस्पन्दा जगती तथा स्थितवती राका सराकापति-
र्ब्रह्मानन्दविशेषनिर्वृतिमिवापन्ना महायोगिनी ॥१७०॥

निष्कूज[द्रु]द्विजमण्डली स्थितवती चित्रार्पितावस्थया
ध्यायन्तीव निमीलितेक्षणयुगा फुल्लत्तनूजावली ।
स्तब्धाङ्गा हरिणादयश्च करिणां यूथान्यथान्ये तथा
विश्वे विस्मयविस्मृतान्यविषया मग्नाः सुषुप्ताविव ॥१७१॥

[7]तन्त्रीव[द्ध]युगद्वयध्वनिगतं वैजात्यमत्यद्भुतं
सूक्ष्मं चिन्तयति स्म विस्मयवती मन्ये स्वयं भारती ।
प्रेमैके रसमाधुरीन्तदितरे लावण्यलक्ष्मीम्परे
केचित् सङ्गतसङ्गमङ्गलतिकाभङ्गीम्परे तुष्टुवुः ॥१७२॥

मन्दारप्रमुखप्रसूननिकरासारः[8] समन्तादभू-
[9]द्व्योम्नोऽनाहतदुन्दुभिध्वनिरथो दिक्चक्रमुल्लासयन् ।
गन्धर्वाः सुरसिद्धचारणगणा विद्याधराः किन्नरा
गायन्ति स्म तदावदातमहिमस्तोमन्तयोः प्रीतयोः[10] ॥१७३॥

---

1. Ms. ०कार 2. Ms. ०न्य० 3. 4. Ms. ०छा० 5. Ms. ०न्
6. Ms. संमार्जनयन् 7. Ms. त्वञ्जी० 8. Ms. ०सरे 9. Ms. ०द्रे० 10. Ms. प्रा०

ततश्च देव्या स्वयमुपगम्य तेषु तेषु निभृतनिकुञ्जेषु गोवर्धनकन्दरेषु वंशीवटभूमिषु धीरसमीरसेतुबन्धसरसीतीरवननन्दभवनवृषभानुनिकेतनकालियह्रदकूलेषूत्प्रेक्ष्यो[1]त्प्रेक्ष्य दर्शयामास ॥१०५॥

ततश्च

यत्र य[त्र] नृपतिर्व्रजत्यसौ
प्रेमभक्तिबलचारुमानसः ।
तत्र तत्र नवहेमनीरद-
च्छाय[2]काययुगलं निरीक्षते ॥१७४॥

ततश्च तदानीन्तनमन्दमारुतो[3]पनीतकुङ्कुमसिन्दूरसान्द्रलाक्षारसार्द्रश्रमनीरशीकरलोहितायामिव पुरन्दरककुभि, निर्भ[4]रपरमलीलासागरतरलकल्लोलान्दोलननिमग्नमूर्छितानान्तत्तद्रहस्यवार्ता इव मिथः समावेदयत्सु श्रीवृन्दावनविहङ्गराजेषु, श्रीमत्किशोरीश्वरीततकालीनचरणशोभातिशयजनितपरिभवखेदवशान्निपीतगरलास्विव मित्रमृदुकरमण्डलैः प्रबोध्यमानासु निजबान्धवपुत्रीप्रेर्यमाणप्रचुरामृतशी[5]करजीव्यमानतया किञ्चिदुत्पक्ष्मोन्मेषसमुल्लासितासु निर्य[6]न्मधुर[मधु]व्याजेन निपीतमपि हालाहलमुद्व[7][म]न्तीष्विव पद्मिनीषु, विपक्षचक्रसमक्षतन्निशावसरविहरण[र]सिकश्रीमत्किशोरीश्वरीचरणनखरकिरणकणापरिभूतदयिततया खेदवशान्मुद्रितवदनास्विव कुमुद्वतीषु,सुचिरवसुन्धरातलनिखातावस्थितमहाभाजनप्रकटकठोरमलिमातिशय इव चिरतरसहवास[स]मासन्ननीललोहितललाटहुतवहशिखासमाजसञ्जनिताञ्जनपुञ्ज इव बहुशो दुरन्तदन्तुरविधुन्तुददन्ताभिघातजनितकिणचक्र इव समुज्जृम्भमाणे हरिणलाञ्छने[8], श्रीमत्पौर्णमासीप्रमुखमुखोच्चार्यमाणेषु प्र[ा]भातिकमङ्गलगाथाप्रबन्धेषु,निकुञ्जभवनेभ्यो निःसरन्तीनाञ्च मणिमयमञ्जीरहारकङ्कण

1. Ms. ०व्यू० 2. Ms. ०च्छा० 3. Ms. ०ता० 4. Ms. ०भ 5. Ms. ०शा० 6. Ms. ०र्य० 7. Ms. ०र० 8. Ms. ०न

ध्वानैः पराभूयमानेषु शब्दान्तरग्रहणसामर्थ्यं[च]षु,भगवती राज्ञा सह कालिन्दीतटमवततार ॥१०६॥

प्राह [स्म] च राजानं—"राजन्, सम्प्रति जलस्थलसम्भवानि कुसुमानि स्वयमुपचिनु कोमलानि च मनोहरपल्लवानि विशेषतश्च तुलसीमालूरदलानि दूर्वाकिसलयान्यपि। ततश्चास्मिन्नरुणोदयसमये श्रीमदरुणसारथितनयायामवगाह्यात्रैवैतदीयतरलतरङ्गशीकरनिकर-चारुसञ्चारशीतले[1] शाखितले विपुलशिलामयविशालवेदिकायामुप-विश्य विहितावश्यककरणीयकलापः सुरासुरसिद्धविद्याधरगन्धर्व-गुह्यकमनुजभुजगकिन्नररजनीचरसेव्यमानचरणसरोरुहस्य भगवतः श्रीगोपीश्वरस्य पूजनप्रणमनस्तवनादिकं विधाय तदाज्ञाप्रसाद-मासाद्य सद्य एव मया सह स्वाभीष्टदैवतचरणसरोजसन्निधान-[2]मासादयिष्यसि" ॥१०७॥

राजा तु यथाज्ञापयति भगवतीति तानि तानि कुसुमानि पल्ल-वानि दूर्वादलानि च स्वयमाहृत्य कालिन्द्यामवगाह्य विरचितसन्ध्या-वन्दनो विहितपूर्वपूर्वाह्न[ो] ध्यानावस्थो बभूव ॥१०८॥

तदा तु निशान्तराले दृष्टानि लीलाविलासाद्भुतानि मनोहर-चरितानि सर्वाण्येव विलोकयामास ॥१०६॥

ततश्च केवलमेकमेव निकुञ्जराजं तन्मध्ये च देदीप्यमानमणि-मयवेदिकोपरिविराजमानमहारत्नमयद्व्यष्टदलपद्माकृतिपर्यङ्कराजे[3] विभ्राजमानममलकलधौतचन्द्रचञ्चलाचयचारुनव्यनीरदनिवहमनो-[4][5]हरं किमपि कमनीयमद्वन्द्वायमानमालोकयन् निस्पन्दनिमीलिताक्षः क्षणमासीत्[6] ॥११०॥

ततो विहितकर्तव्यावशेषः सह भगवत्या निजकरकलितकुसुम-[स]ञ्चयभरितपत्रपुटः प्रथमतो भगवन्तं श्रीगोपीश्वरतया प्रसिद्ध-

1. Ms. °लै 2. Ms. स्वा° 3. Ms. °ह्या° 4. Ms. °रण° 5. Ms. सी° 6. Ms. °मास ॥

[1]मादिभूतमपि निखिलप्रपञ्चस्य श्रीमद्वृन्दाप्रभृतिभिरखिलैश्च व्रज-भुवनवासिभिरभिपूज्यमानं विलोक्य मुदितमानसो मानसोपचारैः स्वयमाहृतैश्च कुसुमसम्भ[ा]रै[2]: सभाजयामास ॥१११॥

तत्र च नानाविधानि भेदभ्रमापनोदनानि स्तुतिवचनानि शुश्राव ॥११२॥

यथा

त्वं वि[3]श्वेश्वरतामुपैषिन जगन्नाथोऽसि किं श्रीधरः
श्रीक[4]ण्ठोऽसि पतिर्गिरामसि ततो नो वा गिरीशः किमु ।
विश्वध्वंसक नो जनार्दनपदेनाभाष्यते किं भवान्
किं नो मोहयसे विभिन्नवचनैरेकार्थसंवादिभिः ॥१७५॥

द्यावाभूमिगिरां दिशामधिपते गोपालता न त्वयि
श्रीमद्गोकुलगोकुलाधिप भवान् किन्नो पशूनाम्पतिः ।
ध्यातस्त्वं निरयान् निहंसि निखिलान् यस्माद्विभो पापि[नां]
तस्मात्त्वं नरकान्तको न किमसि भ्रान्तिं विभो नाशय ॥१७६॥

नाथ त्वं यदुवंशनाशनपटुः किं नासि कामान्तक-
स्त्रैलोक्यं पिबसि त्वमन्तसमये किं नासि पीताम्बरः ।
यद्वैरोचनियज्ञखण्डनकरस्त्वं नो मखध्वंसको
मास्मान् मोहय भिन्नशब्दनिवहैरेकार्थसंवादिभिः ॥१७७॥

पादाम्भोजमृणालितामरधुनीदेदीप्यमानाकृति-
स्त्वं गङ्गाधरतान्तनोषि न किमु त्रैलोक्यचूडामणे ।
मध्याद्यन्तवि[5]हीन हाच्युततया[6]ऽनन्ताजताभ्यां पुन-
स्त्वं विभ्राजसि मा विमोहय जनानेकार्थनानापदैः ॥१७८॥

---

1. Ms. ०मनादि०  2. Ms. ०वैः  3. Ms. विश्वेत्याश्वरता०
4. Ms. ०ण्ठा०  5. Ms. has one redundant नी after विहीन
6. Ms. ०नान्त्या०

यर्हि त्वं भगवान् पुमान् सहचरी पद्मनाथ वाग्देवता
द्वारि[1] भ्राजति ते जयश्च विजयो देवेन्द्रवृन्दस्तुतः ।
त्वञ्चेद्योषिदहो तदा भगवती सा भारती श्रीस्तथा
स्यादेवं विजया जया च विजयः सोऽयं जयस्तत्परः ॥१७६॥

दधानो व्यालोलं बहलहलमुद्दाममुषलं
भुजाभ्यां भीमाभ्यां रुचिरहिमचन्द्रद्युतिधरः ।
कदापीच्छावेगादपि विरचितैरुज्ज्वलभुजै-
स्त्रिशूलादीन् धत्से त्वमिह शितिकण्ठः सुरपते ॥१८०॥

नव्या[2]म्भोधरसान्द्रसुन्दररुचे धत्से चतुर्भिर्भुजै-
र्मुण्डञ्चाभयमप्यसि वरमहो आलम्बिताश[ा]म्बरः[3] ।
लीलामेत्य कदापि कामपि ततः[4] पीताम्बरः सुन्दरः
शङ्खञ्चक्रमथो गदां सरसिजं तैरेव धत्से भुजैः ॥१८१॥

कदापि मृतशोणितप्रवरघोरधाराधरां
दधासि दनुजाननप्रकरमालिकां कामपि ।
कदापि सुरभीकृतव्रजमहीमहीन्द्रोपमां
स्रजम्भजसि सु[न्द]रीमखिलसुन्दरीभिर्वृतः ॥१८२॥

कदापि वकधेनुकप्रबलके[5]शिकंसादिभिः
करोषि रणमद्भुतं नवपयोदकान्तिद्युते ।
कदापि महिषासुरोद्ध[त]शुम्भनिशुम्भादिभिः
प्रसीद करुणाम्बुधे मयि कृपाकटाक्षं क्षिप ॥१८३॥

मिथ्योद्यज्जगदैन्द्र[ज]ालिकमहाशैलूष[व]ल्गूमिकां
त्वं नानेह तनोषि[6] नाद्भुतमिदं त्रैलोक्यचूडामणे ।
निर्माये[7]दृशमङ्गमाकुलधियं मायागुणेनासकृद्-
बद्ध्वा यत् क्षिपसीह मोहजलधौ किं ते महत्त्वं ततः ॥१८४॥

---

1. Ms. ०वि 2. Ms. ०वा० 3. Ms. ०रं 4. Ms. तत्
5. Ms. ०कौ० 6. Ms. ०धि 7. Ms. ०यां

इत्याकर्ण्य ससाधुवादं बहुधा प्रशशंस [सा] भगवती। [११४]
भूपालस्तु—

त्रिलोकीत्रातारं त्रिभुवनगुरु[ं] त्र्यक्षरमयं
त्रिमूर्तिं त्रैगुण्यातिगपरमतत्त्वाकृतिमयम्।
त्रयीतत्त्वं तुर्यं तुहिनगिरिपुत्रीप्रणयिनं
तमःश्यामग्रीवं त्रिपुरहरमीडे त्रिनयनम्॥१८०॥

गिरीशं गौरीशं गणपतिगुरुं गीष्पतितनुं
गुरुं गीर्वाणानां गगनचरगीताद्भुतगुणम्।
गुणातीतं[1] गूढं गिलितगरलं गानतरलं
गुहप्रेमाम्भोधिं गगनवसनं नौमि गिरिशम्॥१८१॥

प्रपन्नार्तिध्वंसं परमपुरुषार्थामरतरुं
पिनाकं बिभ्राणं परमपुरुषं पञ्चवदनम्।
पुरारातिं पञ्चाशुगशमनदृष्टिं पशुपतिं
प्रपञ्चक्षौणीजप्रथमपृथुबीजम्भज मनः॥१८२॥

मुरारातेर्मित्रं[2] मिहिरविधुनेत्रं मृतिहरं
मृगाङ्कालङ्कारं मरकतमणिश्यामलगलम्।
मनोजन्मारातिं मधुरमृगमुद्राङ्कितकरं
महामायाकान्तं मुकुरमणिकान्ति स्मर मनः॥१८३॥

पञ्चास्यं पशुपाशमोचनकरं पूर्णेन्दुकोटिप्रभं
पार्वत्या दयितं प्रपन्नजनताभीष्टप्रदं भावनम्[3]।
पूर्णानन्दमयं पुराणपुरुषं पञ्चाशुगध्वंसनं
प्रोन्मत्तं पितृकाननान्तरचरं प्रेतैः परीतं भजे॥१८४॥

1. Ms. ०गा०   2. Ms. ०ति०   3. Was पावनम् the original reading?

सिद्धीनां[1] सुरशाखिनं सुरपतिं स्ववाहिनीमौलिनं
सान्द्रानन्दमयं सुधाकरकलाचूडं श्मशानप्रियम् ।
शार्दूलाजिनवाससं स्मरहरं शेषाङ्गदं शाश्वतं
शर्वं सर्वमयं शिवं शिवमयं सेवे शिवावल्लभम् ॥१८५॥

भ्राम्यद्भैरवभैरवीभिरभितो भूतैः प्रभूतैर्वृतं
भूतेशं भृशभूतिभूषिततनुं भीमं भवध्वंसनम् ।
भक्तानामतिभानुभूभयहरं भालेक्षणं भव्यदं
भ्राजद्भास्करमेश्वरानलदृशं[2] भक्त्या भवं भावये ॥१८६॥

केलीकल्पितकालकूटकवलं कङ्कालकाकोदरा-
लङ्कारं करुणार्द्रकोमलमतिं कामद्विषं कामदम् ।
काशीशं कलिकालकल्मषहरं कुन्देन्दुकम्बुप्रभं
कान्ताक्रान्तकलेवरार्धमनघं कामेश्वरं भावये ॥१८७॥

वन्दे मन्दरकन्दरोदरचरं कैलासशैलेश्वरं
देवेशं करिपुण्डरीकविलसच्चर्माम्बरं सुन्दरम् ।
राजत्काञ्चनपुष्पयुग्मरचितश्रोत्रावतंसोज्ज्वलं
भक्ताभीष्टकरं वराभयकरं सर्वेश्वराधीश्वरम् ॥१८८॥

प्रपद्यन्ते ये त्वां[3] प्रणवपदसारं सुरगुरुं
श्रुतीनां सर्वस्वं प्रणमदखिलार्थार्पणपरम् ।
न तेषां दुष्प्रापं क्वचिदपि कथञ्चित् किमपि च
प्रभुत्वं सर्वेषामुपरि विबुधानां विजयते ॥१८९॥

इत्यादीनि च व्याजहार ॥११५॥

तत्रैवावान्तरभुवनभूषणायमानां सरणिमतिमनोहरां सुनिभृतां समासाद्य देवी प्राह [स्म]—“महाराज, किमिदानीमत्र पश्यसि” । राजा तु सप्रणामाञ्जलिः प्रत्याह [स्म] ॥११६॥

---

1. Ms. ०नां 2. Ms. ०शां 3. Ms. ०षां

पश्याम्यत्र महासरोजमभितो देदीप्यमानं महा-
तेजोराशिमयञ्च योजनगणायामं[1] किमप्यद्भुतम् ।
हंसास्तत्र चरन्ति किन्तु निभृतश्चाभ्यस्तमौनव्रता-
श्चाञ्चल्यं मरुतोऽपि नात्र किमिदं चित्रं कृपाब्धे वद ॥१६०॥

ततश्च सुमधुरस्मितप्रसन्नवदना देवी प्राह [स्म] ॥११७॥

मथुरामण्डलमेतद्भूप सहस्रारपङ्कजं विद्धि ।
श्रीवृन्दावनभुवनं परमन्तत्कर्णिकाञ्च ॥१६१॥
हंसास्तत्र महान्तो भक्ताः संसारसागरोत्तीर्णाः ।
त[त्त्]त्त्वमगम्यं[2] योगिभिरपि जन्मकोटीभिः ॥१६२॥

इदानीन्तु ध्यानावधानसुधीरचेता विषयान्तरसञ्चारविधुरमतिः
समागच्छेति[3] करेणावलम्ब्य राजानं प्रयान्ती पुरो दर्शयामास ।११८

राजन् पश्य महामहीरुहवनं विश्वैकविस्मापनं
नानारत्नविचित्रमूलभुवनं विद्योतमानं पुरः ।
बालार्कद्विजराजमण्डलनिभश्रीमत्प्रसूनोत्करं
सान्द्राम्भोधरवृन्दमेदुरमहाशाखावितानोज्ज्वलम् ॥१६३॥

पश्येमाः सरसीरसीमसलिलाः प्रोत्फुल्लदिव्योत्पल-
श्रेणीः कूजदनन्तहंसनिवहाः स्वान्तप्रसादप्रदाः ।
पश्योद्दामलताः प्रफुल्लकुसुमा रम्याणि हर्म्याणि च
श्रीचिन्तामणिमण्डपञ्च पुरतो यत् स्वर्गसीमायितम् ॥१६४॥

अस्याभ्यन्तरचारिणं सुरतरोर्मूले निसर्गोज्ज्वले
पश्य द्व्यष्टदल[ा]म्बुजाकृतिमहासिंहासनं शोभनम् ।
अस्मिन् पश्य किमप्युदारमहिमस्तोमं महोमण्डलं[4]
नास्त्यत्रावसरो गिरां परिचितप्रायन्तव क्ष्मापते ॥१६५॥

1. Ms. ०यं 2. Ms. ०त्व० 3. Ms. ०च्छ० 4. Ms. ०नं०

श्रुत्वा काञ्चनचम्पकाचिररुचिस्तोमोरुकान्तिच्छटां
दिव्येन्दीवरनव्यनीरदघटानीलोत्पलश्यामलाम् ।
दीप्तिं काञ्चन काञ्चनोज्ज्वलमहामाणिक्यमुक्तामया-
लङ्कारैः खचितान्तरे सुमधुरस्मेराननाम्भोरुहे ॥१६६॥

भूपालो निपुणो निभाल्य[1] निभृतं[2] निर्णीय[3] विस्फारित-
श्रीमन्नेत्रसरोरुहो विनिपतत्प्रेमास्र[4]धाराप्लुतः ।
देव्याः पादयुगे निपत्य बहुशः साष्टाङ्गपातानतैः
स्तुत्या गद्गदया मनोज्ञपदया तुष्टाव तुष्टान्तरः ॥१६७॥

दूरादेव निरीक्ष्य सुस्मितमुखीं श्रीप्रेमभक्तिं महा-
देवीं श्रीवृषभानुजामुररिपू[5] सन्दर्शितात्यादरौ ।
पह्येहीति मुहुः प्रसारितभुजद्वन्द्वौ समालिङ्गना-
रम्भाडम्बरराजमानपुलकौ प्रोच्चैः समाजुह्वतुः[6] ॥१६८॥

आदावेव सखीगणैः सुनिभृतं विज्ञापितं आविता-
ख्यानं कीर्तितकीर्तिकृत्यनिचयं क्ष्मापालचूडामणिम् ।
देव्याङ्गीकृतमित्यसीमपरमप्रेमार्द्रदृक्प्रेङ्खितैः
सान्द्रानन्दसुधारसैरिव समुत्क्षिप्तैः स्म संसिञ्चतः ॥१६९॥

ततश्च प्रेमभरमन्थरा[ं] प्रणतान्तां समुत्थाप्य युगपदेव निर्भर-मालिलिङ्गतुः । पप्रच्छतुश्च स्वागतमपि क्षेमोदन्तसन्तानं, विनय-[म]सृणं विहिताञ्जलि चेदमाहतुः [स्म] । यथा—देवि, त्वदधीनोऽयञ्जनोऽनन्यपरायण इति सममेव ॥११६॥

देवी तु सप्रणामाञ्जलि[ः प्राह स्म]—त्वदीयास्मीत्येतावन्मात्रमेव मम गौरवं, किन्तु मत्प्रेमपात्रं प्राणमिव द्वितीयं भूमीपतिमेनमनु-

1. Ms. ०न्य 2. Ms. ०भू० 3. Ms. ०र्णा० 4. Ms. ०श्र०
5. Ms. ०म्व० 6. This is incorrect. The correct form is समाजुहुवतुः । प्रोच्चैस्तमामाह्वताम् may be a correct reading.

कम्पयतु। ततो दूरादेव भूमिनिपतितं भूमिपतिं सादरमाहूतम्पुनश्चरणान्तिकभूमण्डनायमानकलेवरं सममेव निजनिजभुजद्वन्द्वनिर्भरपरिपीड़ितश्च विधाय स्वस्ववदनाम्बुजताम्बूलरसधारामस्य प्रसारितेऽञ्जलिपुटे प्रददौ ॥१२०॥

असौ तु कृतार्थोऽस्मीति प्रसादीकृताममृताधिकास्वादरमणीयां [तां] समास्त्रादयामास ॥१२१॥

ततश्च [भगवान् प्रोवाच] ॥१२२॥

राजंस्त्वं कृतकृत्य एव भवतो यद्यन्मनोऽभीप्सितं[1]
सर्वं पाणितले विभावय निजे दीर्घायुरास्तां तव।
शीघ्रं प्राप्नुहि सन्ततिं समुचितां कीर्तिं तथा सम्पदो
राज्यं सुस्थिरमस्तु यावदवनीं वंशे त्वदीये ध्रुवम् ॥२००॥

तदिदानीं कृतकर्तव्योऽसि, साम्प्रतमनयास्मदाराध्यया श्रीप्रेमभक्तिमहादेव्या महाविमानमारुह्य निजराजधानीं प्रति प्रतिष्ठमानः श्रीमदुत्तरकोशलां ममापि राजधानीमवलोक्य भगवत्या समादिष्टेन पथा विशालां नगरीम्प्रति सम्प्रति प्रतिष्ठस्व[2] ॥१२३॥

ततश्च विहि[त]बहुप्रणतिनु[तिः] स राजा[3] यथाज्ञापयसीति[4] तदायतनसीमानमतीत्य देव्या सह विमानमारुरोह ॥१२४॥

ततो देवी तत्तत्प्रदेशमवलोकयन्ती राजानमपि दर्शयन्ती प्राह [स्म] ॥१२५॥

यथा राजन्—

वृन्दारण्यमिदं विलोकय ततो भाण्डीरसंज्ञं ततः
ख्यातं तालवनञ्च काम्यकवनं गोवर्धनोऽयं गिरिः।
अत्रोलूखलबन्धनं[5] त्विह हता सा पूतना राक्षसी
चात्राघानि[6] बकासुरोऽत्र च तृणावर्तोऽपि विध्वंसितः ॥२०१॥

1. Ms. ०स्मि० 2. Ms. ०स्व० 3. Ms. ०माज० 4. Ms.०ती०
5. Ms. ०नू० 6. Ms. ०मालि

[1] अत्राघासुरघातनं पुनरितः सम्मोहनं ब्रह्मणः
पानश्चात्र हुताशनस्य निहतो वत्सो वृषोऽत्रापि च ।
अत्राध्वंसि च धेनुकोऽत्र च हतो घोरः प्रलम्बासुरः
पश्यैतद्वनभोजनस्थलमिदं ख्यातं त्रिलोकीतले ॥२०२॥

राजन् पश्य पुरो[2] विभाति महती श्रीरासकेलिस्थली
यस्या नास्ति तुला समस्तभुवनेष्वेषा कलिन्दात्मजा ।
अक्रूरोऽत्र रथे हलायुधहरी संस्थाप्य नीरान्तरे
दृष्ट्वा तौ तत उत्थितोऽपि रथगौ तुष्टाव तुष्टान्तरः ॥२०३॥

एषा श्रीमथुरा मनोहरपुरी राजन् पुरा श्रीमता
शत्रुघ्नेन निवेशिता भगवता हत्वा महावैरिणम् ।
दुर्वा[रं] लवणं महेश्वरमहाशूलायुधं तत् पुरः
श्रीशत्रुघ्ननिकेतनं निरुपमन्तीर्थं समालोकय ॥२०४॥

एतत्तत् परमं पदं ध्रुवमहाभागस्य यत्राभवत् ।
सान्निध्यं करुणाम्बुधेर्भगवतस्तस्मिन् प्रसादोऽपि च ।
एतन्मल्लनिपातनस्थलमितश्चापस्य[3] भङ्गः पुरः
कंसध्वंसनमत्र मागधचमूविध्वंसनं भूपते ॥२०५॥

इति दर्शयन्ती विमानादवतीर्य राजन् वन्दस्व मधुपुरीमित्युवाच राजा तु यथाज्ञापयति भगवतीति तथा कृत्वा पुनरपि देव्या सह विमानमारुरोह । ततः पुनरपि देवी प्राह [स्म] ॥१२६॥

राजन् पश्य पुरी[4] विभाति महती हिण्डीरपिण्डोपम-
स्फूर्जत्पाण्डरसौधमण्डलमयी देदीप्यमानप्रभा ।
प्राकारैः परिखाभिरुज्ज्वलपरीणाहा पताकाकुलै-
रुड्डीनैः सरयूतटे विजयते श्रीमद्रघूणाम्पतेः ॥२०६॥

---

1. Ms. अत्र अघा० 2. Ms. ०म० 3. Ms. श्या० 4. Ms. ०रो

ततश्च पुरीसविधमागत्य विमानादवरुह्य सरयूमवगाह्य पुरीमध्यमागत्य तत्र च प्रासादमध्यविराजमानमहासिंहासनाधिष्ठितं श्रीसीतासौमित्रिसमीरसूनुभरतशत्रुघ्नमूर्तिसहितं चतुर्दशभुवनाधिपतिसमाजसम्पूज्यमानं श्रीराजराजेश्वरविग्रहन्ददर्श[1] हर्षभरगद्गदमानसश्च तुष्टाव ॥१२७॥ यथा—

पद्मायताक्षं कमलासनस्थं
श्यामं नवाम्भोधरकान्तिकान्तम् ।
राजाधिराजं जगदेकनाथं
श्रीरामचन्द्रं शरणं प्रपद्ये ॥२०७॥

स्मेराननं पद्मपलाशनेत्रं
किरीटिनं चन्द्रपरार्ध्यकान्तिम् ।
श्रीजानकीनाथमना[थ]नाथं
श्रीरामचन्द्रं शरणं प्रपद्ये ॥२०८॥

विभीषणाराधितपादपद्मं
सुग्रीवसौमित्रिनिषेविताङ्घ्रिम् ।
दशाननध्वान्तसहस्रभानुं
श्रीरामचन्द्रं शरणं प्रपद्ये ॥२०९॥

महाभुजं कुण्डलमण्डितास्यं
पीताम्बरं कोटिदिवाकराभम् ॥
आजानुबाहुं विधुभानुनेत्रं
श्रीरामचन्द्रं शरणं प्रपद्ये ॥२१०॥

श्रीपार्वतीशङ्करगीतकीर्तिं
ब्रह्मादिसम्पूजितपादपद्मम् ।
यं तारकं ब्रह्म वदन्ति वेदा-
स्तं रामचन्द्रं शरणं प्रपद्ये ॥२११॥

---

1. Ms. has one redundant न after ददर्श

वेदान्तपातञ्जलसांख्यसारं
सर्वागमाम्भोनिधिरत्नमेकम् ।
महानुभावं महिमाम्बुराशिं
श्रीरामचन्द्रं शरणं प्रपद्ये ॥२१२॥

अपारसंसारसमुद्रसेतू-
भूताङ्घ्रिपङ्केरुहमप्रमेयम् ।
कारुण्यसिन्धुं कमनीयमूर्तिं
श्रीरामचन्द्रं शरणं प्रपद्ये ॥२१३॥

प्रचण्डमार्तण्डसहस्रजित्वर-
प्रतापसन्तापितवैरिमण्डलम् ।
असंख्यचन्द्रोज्ज्वलकीर्तिमण्डलं
श्रीरामचन्द्रं शरणं प्रपद्ये[1] ॥२१४॥

वेदान्तवेद्यं प्रणवैकगम्यं
योगैकसारं यमिनां शरण्यम् ।
अचिन्त्यमव्यक्तमनन्तमाद्यं
श्रीरामचन्द्रं शरणं प्रपद्ये ॥२१५॥

यन्नाम काश्यां मणिकर्णिकायां
मुमूर्षतां श्रोत्रपुटे महेशः ।
ददाति मुक्त्यै करुणाम्बुराशिं
तं रामचन्द्रं शरणं प्रपद्ये ॥२१६॥

महामहोदारपराक्रमाढ्यं
मोहापहं भक्तमहोदयञ्च ।
महामहोल्लासविलाससिन्धुं
श्रीरामचन्द्रं शरणं प्रपद्ये ॥२१७॥

---

1. The meter demands twelve letters in each line, but here we have eleven. गतोऽस्म्यहम् in place of प्रपद्ये removes the metrical mistake.

साकेतपुर्यां वरहर्म्यमध्ये
महार्हसिंहासनराजमानम् ।
राजश्रियालङ्कृतमेकवीरं
श्रीरामचन्द्रं शरणं प्रपद्ये ॥२१८॥

संवीज्यमानं भरतेन भक्त्या
शत्रुघ्नसौमित्रिविभीषणाद्यैः ।
सच्चामरैः कुन्दतुषारशुभ्रैः
श्रीरामचन्द्रं शरणं प्रपद्ये ॥२१९॥

हनूमताराधितपादपद्मं
संस्तूयमानं सनकादिभिश्च ।
वीणाकरैस्तुम्बुरुनारदाद्यैः
संकीर्त्यमानं[1] रघुनाथमीडे ॥२२०॥

[2]सबृंहितैर्मत्तकरीन्द्रवृन्दैः
सहेषितैस्तुङ्गतुरङ्गसङ्घैः ।
सानन्दमुद्[3]ग्रीवमुदीक्ष्यमाणं
श्रीरामचन्द्रं शरणं प्रपद्ये ॥२२१॥

वैतालिकैः कुण्डलमण्डितास्यैः
समागधैर्नव्यसुचारुकाव्यैः ।
संस्तूयमानं रघुवंशकेतुं
श्रीरामन्द्रं शरणं प्रपद्ये ॥२२२॥

बद्धाञ्जलीनां नतकन्धराणां
दिगीश्वराणां निकरैः समन्तात् ।
प्रकीर्यमाणं कुसुमैरनेकैः
श्रीरामचन्द्रं शरणं प्रपद्ये ॥२२३॥

---

1. Ms ०य० 2. Ms. सं० 3. Ms. ०सुग्रीव०

विद्याधरीणां सुरसुन्दरीणां
सकिन्नरीणां निकरैः पुरस्तात् ।
तौर्यत्रिकैः सम्परितोष्यमाणं
श्रीरामचन्द्रं शरणं प्रपद्ये ॥२२४॥

वक्त्रैश्चतुर्भिश्चतुराननेन
पञ्चाननेनाननपञ्चकेन ।
षड्भिर्मुखैश्चैव षडाननेन
संस्तूयमानं रघुनाथमीडे ॥२२५॥

वेदैश्चतुर्भिर्धृतचारुदेहै-
र्मन्त्रैस्तथा विग्रहवद्भिरुच्चैः ।
संस्तूयमानं प्रणवेन सार्धं
श्रीरामचन्द्रं शरणं प्रपद्ये ॥२२६॥

आद्यैर्मरीचिप्रमुखैर्मुनीन्द्रै-
रामीलिताक्षैर्गलदस्रधारैः ।
निरीक्ष[य]माणाङ्घ्रिसरोजयुग्मं
श्रीरामचन्द्रं शरणं प्रपद्ये ॥२२७॥

कन्दर्पकोटिद्युतिदेहकान्ति-
संमोहिताशेषसुराङ्गनाभिः ।
निमेषहीनैर्नयनैरजस्रं
निरीक्ष्यमाणं रघुनाथमीडे ॥२२८॥

वृन्दारकैरम्बरतोऽवतीर्णै-
र्मन्दारसन्तानकदामवृन्दैः ।
संपूज्यमानाङ्घ्रिसरोजयुग्मं
श्रीरामचन्द्रं शरणं प्रपद्ये ॥२२९॥

इन्द्रादिवृन्दारकवन्द्यमान-
पदारविन्दं जगदेकवन्द्यम् ।
आनन्दकन्दं निजलोकबन्धुं
श्रीरामचद्रं शरणं प्रपद्ये ॥२३०॥

वीणादियन्त्रैर्मृदुमन्द्रनादैः
कलतस्त्वरग्रामकमूर्छनाभिः ।
गन्धर्वराजैरुपगीयमानं
श्रीरामचन्द्रं शरणं प्रपद्ये ॥२३१॥

मृदङ्गभेरीपटहप्रणादै-
रालोकयालोकयतारशब्दैः ।
स्वस्तीतिशब्दैर्जयशब्दमिश्रैः
सन्तोष्यमाणं रघुनाथमीडे ॥२३२॥

दौवारिकावेदितभूरिनम्र-
सोपायनक्ष्मापतिवृन्दमुच्चैः ।
प्रसारितापाङ्गमवेक्षमाणं
श्रीरामचन्द्रं शरणं प्रपद्ये ॥२३३॥

स्मितावलोकेन च तर्पयन्त[1]-
माश्वासयन्तं करपल्लवेन ।
प्रजा[ः] प्रजानाथमुदारसत्त्वं[2]
श्रीरामचन्द्रं शरणं प्रपद्ये ॥२३४॥

कटाक्षपातेरितकोषनाथ-
विकीर्णनानाविधरत्नजातैः ।
कृतार्थयन्तं निखिलार्थिसार्थं
श्रीरामचन्द्रं शरणं प्रपद्ये ॥२३५॥

---

1. Ms. ०न्तु०  2. Ms.०त्वं०

श्रीलक्ष्मणावेदितराजकार्य-
माकर्णयन्तं चलकुण्डलेन ।
श्रोत्रेण सङ्कोचितलोचनान्तं
श्रीरामचन्द्रं शरणं प्रपद्ये ॥२३६॥

अनन्तकर्कोटकतक्षकाद्यैः
समुज्ज्वलद्भिः[1] स्वफणामणीन्द्रैः[2] ।
नीराज्यमानाङ्घ्रिसरोजयुग्मं
श्रीरामचन्द्रं शरणं प्रपद्ये ॥२३७॥

वाण्या भवान्याम्बुधिकन्यया च
कन्याभिरन्याभिरमर्त्यजातैः ।
प्रदीपमालाभिरुदारभाभि-
र्नीराज्यमानं रघुनाथमीडे ॥२३८॥

किरीटरत्नद्युतिनिर्जिताभि-
स्ताराभिराराधनतत्पराभिः ।
नीराज्यमानं मणिरत्नदीपैः
श्रीरामचन्द्रं शरणं प्रपद्ये ॥२३९॥

मुखेन्दुविम्बद्युतिनिर्जितेन
ताराधिराजेन नराधिराजम् ।
नीराज्यमानं निजचन्द्रिकाभिः
श्रीरामचन्द्रं शरणं प्रपद्ये ॥२४०॥

दिनप्रदीपेन कुलप्रदीपं
सहस्रसंख्यैः[3] किरणप्रदीपैः ।
नीराज्यमानं निजयोरुकान्त्या
विराजमानं रघुनाथमीडे ॥२४१॥

---

1. Ms. ०ज्व० 2. Ms. स० 3. Ms. ०ख्यै:

पादाम्बुजद्वन्द्वसुचारुशोभा-
लोभाकुलैर्भृङ्गकुलैः समन्तात् ।
भाङ्कारघोषैः स्तुतपादपद्मं
श्रीरामचन्द्रं शरणं प्रपद्ये ॥२४२॥

मन्दाकिनीमानसराजहंसै-
रपूर्वपाथोजधियातिहृष्टैः ।
उपास्यमानाङ्घ्रिसरोजयुग्मं
श्रीरामचन्द्रं शरणं प्रपद्ये ॥२४३॥

अमन्दवैदग्धरसप्रवाह-
विलोलितापाङ्गतरङ्गितेन ।
श्रीजानकीवक्त्रमवेक्ष[1]माणं
श्रीरामचन्द्रं शरणं प्रपद्ये ॥२४४॥

प्रचण्डकोदण्डस[2]काण्डतूण-
विराजमानोभयपार्श्व[3]देशम् ।
सुरासुरैरर्चितपादपद्मं
श्रीरामचन्द्रं शरणं प्रपद्ये ॥२४५॥

इति स्तुत्वा प्रणम्य देव्या सह विमानराजमारुरोह ॥ ततश्च पुनरपि देवी प्राह [स्म] ॥१२८॥

राजन् पश्य पुरो विभाति सरयूस्वर्लोककल्लोलिनी-
सम्भेदो यमुदाहरन्ति कृतिनस्तीर्थं महापावनम् ।
क्षेत्रं दर्दुरसंज्ञितं पुनरिदं रम्यो महानाश्रमो
वाल्मीकेश्च[-थ]वनस्य चात्र पुरतो धन्या विदेहक्षमा ॥२४६॥

---

1. Ms. क्ष्य० 2. Ms. ०म० 3. Ms. ०र्श्व०

एतत्तज्जनकपुरं वदन्ति धीरा
यत्रासीज्जनकमहीपतिर्महात्मा ।
योगीन्द्रस्त्रिपुरनिसूदनेन चापं
विन्यस्तं स्वयमपि यत्र तोषितेन ॥२४७॥

तस्माद्द वेगवशात् क्षणेन परमं श्रीगण्डकीगङ्गयोः
सम्भेदं समुपेत्य तत्र विहितस्नानादिकृत्योत्करः ।
प्रोत्तीर्यामरनिम्नगां जववशादासाद्य विद्योतितां
रम्यां फल्गुतटे गयामवतरन् क्ष्मापालचूडामणिः ॥२४८॥

दृष्ट्वा विष्णुपदं विधाय परमां पूजाञ्च तस्यादरा-
त्तीर्थाखिलकृत्यमाचरितवान्[1] देव्याज्ञया भक्तितः ।
आरुह्याथ विमानराजमतुलं दिव्यं मनोरंहसं[2]
मन्दारे मधुसूदनं परमया भक्त्या नृपो दृष्टवान् ॥२४९॥

तन्तुष्टाव ननाम देव्यनुमतस्तस्मात् प्रयातस्त्वरन्[3]
दूरादेव ददर्श काननवरं श्रीवैद्यनाथाश्रमम् ।
दृष्ट्वा तं परिपूज्य शान्तहृदयः श्रीवैद्यनाथं विभुं
नत्वारुह्य विमानमैक्षत ततो वक्रेश्वरं शङ्करम् ॥२५०॥

कृत्वा तत्परिपूजनस्तुतिनती[4][:] श्रीपञ्चकूटे गिरौ
दृष्ट्वा श्रीरघुनाथलक्ष्मणमहीपुत्रीसमीरात्मजान् ।
भक्त्यापूजयदुत्तमस्तुतिशतैः सन्तोषयन् दण्डव-
न्नत्वा रामपदाङ्कमैक्षत मुदा तञ्चार्चयद्भक्तितः ॥२५१॥

आरुह्याथ विमानमुत्तमजवं शीघ्रं प्रयातोऽम्बिकां
दृष्ट्वाथो जगदम्बिकां भगवतीं सिद्धेश्वरीमार्चयत् ।
तस्मादेत्य नवाधिकाररुचिरां श्रीगुप्तपल्लीपुरीं
[श्री]वृन्दावनचन्द्रमैक्षत तथा श्रीरामचन्द्रं विभुम् ॥२५२॥

---

1. Ms. ०या० 2. Ms. मनोहरहंसं 3. Ms. प्रयातृस्तरन् 4. Ms. ०म०

भक्त्या तौ परिपूज्य शीघ्रमगमच्छ्रीमत्त्रिवेणीतटं[1]
स्नात्वा तत्र नृपो जगाम झटिति श्रीमद्विशालां पुरीम्।
तत्रागत्य विमानराजसहिता राज्ञा समभ्यर्चिता
देवी प्राह महीपते तव हृदि स्थास्याम्यहं निश्चला ॥२५३॥

राजन्नस्तु सुदीर्घमायुरपि ते शीघ्रं तथा सन्तति-
र्योग्या चान्वयतामुपैतु परमा श्रीः कीर्तिरप्येधताम्।
आधिव्याधिविपत्सपत्नविपदां निःशेषनिर्मूलनात्
प्राज्यं राज्यमतीवमोदतरलो नित्यं[2] चिरम्पालय ॥२५४॥

किन्तु

श्रीवाणेश्वरसंज्ञितं द्विजवरं सर्वात्मनैवाश्रितं[3]
प्रेम्णाप्यायय येन निर्वृतमनास्तिष्ठेत्सदैवान्तिके।
एष प्रत्यहमेव ते वितनुते भूत्यै तथैवापदां
शान्त्यै स्वस्त्ययनं त्वदाश्रिततया ख्यातश्च भूमण्डले ॥२५५॥

अन्यप्रतिग्रहनिवृत्तिकरीञ्च वृत्तिं
ग्रामान्वितामुभयकीर्तिविवृद्धिहेतुम्।
सेतुञ्च खेदजलधेरयमिच्छतीह
सन्तोष्यतां द्रुतमसौ समुपाश्रितस्त्वाम् ॥२५६

जीयान्माणिक्यचन्द्रस्तव सचि[व]वरः पुत्रपौत्रप्रपौत्रै-
र्धन्यः श्रीरामचन्द्रार्चननिभृतमनोवृत्तिरुद्दामकीर्तिः।
एतेनात्यर्थयुष्मत्प्रणयनयभृता[4] शौर्यगाम्भीर्यवीर्य-
प्राचुर्याश्चर्यचर्याचयजितगुरुणा पाहि भूमीञ्चिराय ॥२५७॥

इत्युक्त्वा च तेन विमानराजेन परमसाधनाख्येन देवी हृदयमवनी-पतेर्विवेश ॥१२६॥

ततश्च प्र[ा]भातिकमङ्गल्यमृदङ्गशङ्खपटहध्वनिभिर्वन्दिवृन्दनान्दी-नादैश्च व्यपनीतनिद्रो महीमहेन्द्रः पर्यङ्कादुत्तस्थौ ॥१३०॥

1. Ms. ०त् श्री० 2. Ms. ०त्या 3. Ms. ०रा० 4. Ms. ०भू०

उत्थाय च कृतनित्यक्रियः श्रीगुरुदेवसन्निधौ भूमीसुरसभायां शाण्डिल्यमभिमुखीकृत्य तमशेषतः[1] स्वप्नवृत्तान्तमावेदयामास ॥१३१

सर्वे च सविस्मयमाकर्ण्याशीर्भिः संवर्धयामासुः ॥१३२॥

यथा ॥

चेतश्चन्द्रकचूडचारुचरणे चन्द्राभचञ्चन्नख-
श्रेणीचारुविभूषणे चरतु ते चाञ्चल्यहीनं चिरम् ।
चण्डीचन्द्रकलाविलासिमुकुटश्चूर्णीकरोत्वापद-
श्चण्डान् विद्विषतश्चराचरगुरुस्त्वां पातु चक्रायुधः॥२५८॥

आसीद्भूपतिचक्रमौलिमुकुटो यः कृष्णरामः कृती
तत्पुत्रो जगदादिरायसुकृती ख्यातो धरामण्डले ।
तस्मादद्भुतकीर्तिचन्द्रकिरणश्रेणीनिरस्ताखिल-
ध्वान्तौ[घो]ऽजनि कीर्तिचन्द्रसुकृती क्ष्मापालचूडामणिः ॥२५६॥

यद्दानेन च दैन्यशून्यमभवद्भूमण्डलं सर्वतः
स्वप्नेऽपि स्मरति प्रतीपनृपतिर्यद्दोर्द्वयीविक्रमम् ।
श्रीराधामुरवैरिचारुचरणद्वन्द्वैकचिन्तापरो
यो योगेन तनूममुञ्चदमले स्वर्वाहिनीवारिणि ॥२६०॥

पुत्रस्तस्य महीभुजः समजनि श्रीमान् गुणाम्भोनिधि-
र्विद्याभिर्विनयैर्नयैरभिनयैः प्रेङ्खत्प्रतापोच्चयैः ।
प्रादुर्भूय महाभुजः सुरपुरीनाथं कृतावग्रहं
सम्पातैर्विविधास्त्रसञ्चयमयैर्जित्वा जहासेव यः ॥२६१॥

सप्तग्रामसमीपधाम परमं श्रीगुप्तपल्लीति य-
च्छ्रीवृन्दावनचन्द्रनन्दितमपि[1] श्रीरामचन्द्रोज्ज्वलम् ।
यत्र स्वर्गधुनीतरङ्गनिकराः स्वर्वर्त्मसेतूपमा
विद्वांसो निवसन्ति त[त्र च] महापुण्यातिधन्या जनाः ॥२६२॥

1. Ms. ०द्द० 2. Ms. ०त् श्री०

तत्राश्रान्तबुधेन्द्रसुन्दरयशःसन्तानसन्तानस-
द्वंशोत्तंसपरम्परा विजयते शोभाकरस्योत्तरा ।
यत्रामित्रबुधद्विपेन्द्रदमनप्रोद्दामकण्ठीरवो
वादीन्द्रः कविवक्त्रकैरवरवियों[1] रामनामा कृती ॥२६३॥

जातोऽस्मादतुलो यथा दशरथाच्छ्रीराघवेन्द्रस्तथा[2]
धीरेन्द्रो भुवि राघवेन्द्रसुकृती ख्यातो धरामण्डले ।
यस्मात् कामपि लब्धवानथ महाविद्यां यदात्मोद्भवो
विष्णुर्जिष्णुरभूदभूतसदृशः सिद्धान्तवागीश्वरः ॥२६४॥

यत्काव्योदयतः शिलापि मृदुला वज्रं शिरीषायते
विद्वांसः परिघूर्णयन्ति नितरां मूर्धानमूर्ध्वाननाः ।
यद्विद्या यशसा निगद्यत इह ब्रह्माण्डभाण्डोदरे
तस्याभूत्तनयः सुरेज्यसदृशः सत्तर्कवागीश्वरः ॥२६५॥

पुत्रस्तस्य [च] रामदेवकृतिनः श्रीयुक्तवाणेश्वरो
धीरश्रीयुतचित्रसेनधरणीनाथेन संवर्धितः ।
चम्पूक्कामपि निश्चलेन मनसा तस्याज्ञया निर्ममे
विद्वांसः परिशोधयन्तु कृपया तेभ्यो ममास्तां नतिः ॥२६६॥

ध्यात्वा श्रीरामचन्द्रं सह जनकसुतालक्ष्मणाभ्यां प्रयत्ना-
दाज्ञामाज्ञाय राज्ञामपि मुकुटमणेश्चित्रसेनाह्वयस्य ।
शाके कालाङ्कतर्कौषधिपतिगणिते[3] कार्तिकीये दशांशे
पूर्णां श्रीचित्रचम्पूं व्यतनुत दिवसे श्रीलवाणेश्वराख्यः ॥२६७॥

शकाब्दाः ॥१६६६॥

---

1. Ms. has one redundant व after कैरव    2. Ms. ०त् श्री०

3. Ms. ०ङ्क०

धीरः श्रीचित्रसेनः क्षितिपतितिलकः श्रीलमाणिक्यचन्द्रो
मन्त्रिस्तोमाग्रगण्यस्तदुभयमिलनं रत्नहेमाभिषङ्गः ।
आस्तां भूभूषणाय प्रकटितमहिमा पुत्रपौत्रप्रपौत्रैः
स्फूर्जद्दीप्तिश्चिराय प्रथयतु परमं कीर्तिकर्पूरराशिम् ॥२६८॥

इति महामहोपाध्यायमहाराजाधिराजसभास्तारवरश्रीयुत-
वाणेश्वरविद्यालङ्कारभट्टाचार्यविरचिता
चित्रचम्पूः समाप्ता ॥



# Corrigenda.

| Page | Foot-note | Line | | Read | | For |
|---|---|---|---|---|---|---|
| Page 6 | Foot-note 1 | Line 3 | *Read* | Ādiśūra | *For* | Adiśūra |
| ... 8 | ... 8 | ... 3 | ... | भैरवी | ... | भरवी |
| ... 9 | | ... 14 | ... | Alivardi | ... | Aliverdi |
| ... 17 | ... 33 | ... 4 | ... | विप्रेण | ... | विप्रेण। |
| ... 18 | | ... 5 | ... | Singh[34] | ... | Singh |
| ... 19 | | ... 3 | ... | Khan[37] | ... | Khan |
| ... 26 | ... 47 | ... 8 | ... | बर्गि | ... | वर्गि |
| ... 28 | ... 48 | ... 3 | ... | चम्पूरित्य० | ... | चम्पूारत्य० |
| ... घ | | ... 10 | ... | ०सेनस्य | ... | ०सेनस्ये |
| ... ४ | ... 4 | | ... | ०वोम्मोहिनीं | ... | विम्मोहिनीं |
| ... ५ | | ... 7 | Place a Comma after च | | | |
| ... ६ | | ... 22 | *Read* | ०रङ्कु० | *For* | ०रङ्क० |
| ... ७ | | ... 10 | ... | ०पूर्वा | ... | ०पूर्वां |
| ... ८ | ... 3 | | ... | ०वं | ... | वं |
| ... १२ | | ... 21 | ... | ०काङ्कुर० | ... | ०काङ्कर० |
| ... १४ | | ... 19 | ... | ०संवर्ध्य० | ... | ०सवर्ध्यं० |
| ... १५ | | ... 7 | ... | सार्धं | ... | सार्धं |
| ... ... | | ... 8 | ... | युक्तार्थं | ... | युक्तार्थं |
| ... १० | | ... 18 | ... | भिन्नेन | ... | भिन्नन |
| ... २३ | | ... 8. | 1 should be on ०त्वो *not* on ०ह्री० | | | |
| ... २६ | | ... 6 | *Read* | ०वाध्य० | *For* | ०वाध्य० |
| ... २७ | | ... 21 | ... | विचित्रवीर्य | | विचित्रवीर्य |
| ... ३० | | ... 15 | ... | सायन्तन०[४] | ... | सायन्तन० |

| | | | |
|---|---|---|---|
| … ३६ | … 4 … | आश्चर्यं … | आश्चर्यं |
| … ३७ | … 1 … | आश्चर्यं … | आश्चर्यं |
| … … | … 7 … | सर्वं … | सर्वं |
| … … | … 25 … | सर्वं … | सर्वं |
| … ४० | … 4 … | ०पताक [ा]० … | ०पताक। [ा]० |
| … ४१ | … 17 … | बद्ध्या … | बद्ध्वा |
| … ४२ | … 16 … | ०सिंहासन० … | सिहासन० |
| … ४५ | … 5 … | तीर्थं … | तीर्थं |
| … … | … 8 … | ०स्तीर्थं० … | ०स्तीर्थं० |
| … ४६ | … 22 … | ०दपूर्वं … | ०दपूर्वं |
| … ४८ | … 22 … | तीर्थं … | तीर्थं |
| … ५२ | … 4 … | ०बाधित० … | ०वाधित० |
| … ५४ | … 2 … | ०बाधित० … | ०वाधित० |
| … ५६ | Foot-note 4. Delete. | | |
| … ६८ | Line 17 *Read* | तन्त्रीबद्ध० *For* | तन्त्रीवद्ध० |
| … ६९ | … 15 Place a hyphen after | | निर्य |
| … … | … 24 … | … | ०कङ्कण |
| … ७१ | … 7 *Read* | ०मुपैषि न *For* | ०मुपैषिन |
| … ७४ | … 17 … | त्वां … | त्वा |
| … ७८ | … 16 … | विध्वसनं … | विध्वस नं |
| … ७९ | … 11 … | ०परार्धं० … | ०परार्ध्यं० |
| … ८६ | … 11. 2 should be on म० not on | | ०व्यं |
| … ८७ | … 15 *Read* | ०विवृद्धि० *For* | ०विबृद्धि० |

On page 6, Foot-note No. 1. the name of Bāṇeśvara's great great grandfather has been mentioned as Paramānanda. But the poet while giving his pedigree in the Text (Verse, 263) mentions his name as Rāma.